**सीता**—( अपवार्य । ) आर्यपुत्र, इमां राक्षसीमिव तर्कयामि ।

**रामः**—( अपवार्य । ) कस्य वा हेतोः ।

**सीता**—( अपवार्य । ) ननु पश्य पारिप्लवं चक्षुः, अन्तःशङ्का॰वेदि मन्दमन्दं पदविन्यसनं, निष्कारणः स्वेदश्च ।

**रामः**—( अपवार्य । ) प्रिये, एतानि ते कारणानि । ननु पश्य

चापल्यमक्ष्णि सहजं हरिणायताक्षि
श्रोणीभरेण हि नितम्बिनि यानमान्द्यम् ।
स्वेदः श्रमेण सुकुमारि यथा तवाङ्गे
साधारणं तु न विशेषविकल्पनार्हम् ॥ ३८ ॥

**शूर्पणखा**—प्रपन्नबन्धुं भवन्तं विशेषतो ज्ञातुमिच्छामि ।

**रामः**—भद्रे, श्रूयताम् । अहं ह्ययोध्याधिपतेर्महाराजदशरथस्यात्मजो रामो नाम । एषा मे दयिता जनकेन्द्रनन्दिनी सीता । असौ च ममानुजो लक्ष्मणः ।

**शूर्पणखा**—तर्हि दण्डकारण्यप्रवेशे कारणेन बलवत्तरेणैव भवितव्यम् ।

**रामः**—भद्रे, आं तथैव ।

संदेशतो वयममी भरतस्य राज्ञः
पृथ्वीहिते कृतमतेरटवीष्वटामः ।
त्रातुं जनानशरणान्दयनीयशीलान्
हिंसारुचीनपि खलान् प्रसभं विनेतुम् ॥ ३९ ॥

**शूर्पणखा**—( स्वगतम् । ) अहो वेवइ मे हिअअं (ठ) ( प्रकाशम् । ) तर्हि लोकबन्धुरिव स राजा भरतः ।

**रामः**—भद्रे, लोकबन्धुरेव स महात्मा । यतोऽधिकृताः

---

(ठ) अहो वेपते मे हृदयम् ।

अकृपणाः कृपणेषु कृपार्णवा अपरुषाः परुषेषु च कर्कशाः ।
न गृहमेकममी विपुलाशया भुवनमेव विदुः स्वकुटुम्बकम् ॥४०॥

**शूर्पणखा**—( स्वगतम् । ) अहो उदग्गं इमिणो वअणं (ड)

**रामः**—भद्रे, त्वां प्रति भवति मे बहुधा विकल्पः ।

**शूर्पणखा**—कामं पृच्छ्यताम् ।

**रामः**—किं देवतासि

**शूर्पणखा**—( स्वगतम् । ) एव्वं रिजुस्सुहावे एदस्सिं ण मे मिच्छा रोअइ (ढ) ( प्रकाशम् । ) न सुरेषु ममास्ति सख्यं

**रामः**—नागासि किं

**शूर्पणखा**— न हि रसातलमीक्षितं प्राक् ।

**रामः**—ऋषी तपोवनभुवः

**शूर्पणखा**— न तपः प्रियं मे

**रामः**—किं वा शरी भवसि

**शूर्पणखा**—( सशिरःकम्पम् । ) बाढमहं तथास्मि ॥ ४१ ॥

**रामः**—( अपवार्य । सस्मितम् । ) देवि, प्रसन्नस्ते तर्कः । ( प्रकाशम् । ) अयि राक्षसि, इच्छामि ते नामादिकं श्रोतुम् ।

**शूर्पणखा**—श्रूयताम् । अपि शृणोषि रावणं नाम द्वितीयं पौलस्त्यम् ।

**रामः**—कस्तं न जानाति राक्षसेश्वरम् ।

**शूर्पणखा**—तस्याहमनुजा शूर्पणखा नाम । साहं जनस्थानाधिष्ठितस्य भ्रातुः खरस्य साहाय्यार्थमत्रैव वसामि ।

**रामः**— दर्शितं तर्हि त्वया बलवद्भ्रातृवात्सल्यम् । अयि शूर्पणखे, महाप्रतापस्तव भ्राता रावणः श्रूयते ।

---

(ड) अहो उदग्रमस्य वचनम् । (ढ) एवमृजुस्वभाव एतस्मिन्न मे मिथ्या रोचते ।

**शूर्पणखा**—(स्वगतम् ।) णूणं एदस्स रावणे गउरवं अत्थि । अदो मं तदो भआदो एव्व अंगीकरिस्सदि । इमस्सिं मइ आसत्तचित्ते, एसा वि रावणं आसादिअ णिव्वुदा होदु तवस्सिणी । तदो अ रावणस्स वि पिअं किदं होदि । ता से गुणा वण्णेमि । (ण) (प्रकाशम् ।) भो राम, महाप्रताप एव मे भ्राता रावणः ।

**अकामां यो रम्भां धनदतनये सक्तहृदयां**
**हठाद्भेजे वीर्यादकृत महिषीं दानवसुताम् ।**
**सुरीर्बन्द्यां क्षिप्त्वा भुजगनरनारीषु च वरा**
**यथाकामं भुङ्क्ते त्रिजगदभिभूय स्वमहसा ॥ ४२ ॥**

**सीता**—(अपवार्य ।) आर्यपुत्र, अतिदारुणं वर्ण्यते

**रामः**—(अपवार्य ।) अतिबीभत्सं च (प्रकाशम् ।) अयि शूर्पणखे, एवं प्रभाववति तव भ्रातरि स्थितेऽपि कुतस्ते भयम् ।

**शूर्पणखा**—(स्वगतम् ।) सुट्ठु ठाविदं इमस्स हिअए गोरवं भअं अ । ता दाणिं जुत्तं पअडेदुं मे आसअं (त) (प्रकाशम् ।) नाथ, कामशरादन्यत्र नास्ति मे पुरुषान्तराद्भयम् । ततो मां त्रातुमर्हसि ।

**रामः**—(मुखं परावर्त्य स्वगतम् ।) अवश्यं निग्राह्येयं दुष्टराक्षसी । मया तु दत्ताभया । अतो लक्ष्मण एवैनां विनेष्यति । तदिमामभिमताभासया वाचा निरस्यामि । (प्रकाशम् ।) अयि कामातुरे, शृणु

**कलत्रवानस्मि ममानुजं व्रजेः स दारकाङ्क्षी त्वमनङ्गविह्वला ।**
**समागमः स्यादुभयोः सकाङ्क्षयोः सुसंहितो नोत्सुकनिर्व्यपेक्षयोः**

---

(ण) नूनमेतस्य रावणे गौरवमस्ति । अतो मां ततो भयादेवाङ्गीकरिष्यति । अस्मिन्मय्यासक्तचित्ते, एषापि रावणमासाद्य निर्वृता भवतु तपस्विनी । ततश्च रावणस्यापि प्रियं कृतं भवति । तदस्य गुणान्वर्णयामि । (त) सुष्ठु स्थापितमस्य हृदये गौरवं भयं च । तदिदानीं युक्तं प्रकटयितुं मे आशयम् ।

अतः सत्वरं याहि मे भ्रातरम्।

**शूर्पणखा**—(स्वगतम्।) जुत्तं उप्पेक्खदि क्खत्तिअकुमारो। (थ) (प्रकाशम्।) यदि ते भ्रातरमपि मया कलत्रवन्तं चिकीर्षसि तर्हि तमुपाश्रयामि (उपसृत्य।) भो लक्ष्मण, श्रुतस्ते ज्येष्ठस्य संदेशः। तन्मां जायार्थे परिगृहाण। यतः

अनभिमतोऽपि गरीयान् भवति नियोगो गुरोर्हि भक्तिमताम्।
किं पुनरभिलषितोऽर्थः स्वयमभिपतितोऽनुमत्यास्य ॥ ४४ ॥

अतो मत्परिग्रहेण तव गुरोस्तथा त्रिभुवनगुरोर्मदनस्य च शासनमवन्ध्यं विधेहि।

**लक्ष्मणः**—(विलोक्य स्वगतम्।) सपद्येव निष्कासयितव्येऽस्मिन् राक्षसि, किमित्येवं क्रीडत्यार्यः। न च तदुक्तिभङ्गिमवगच्छति कामान्धेयम्। तदहमप्यार्यस्य वचनभङ्ग्यैव निरस्यामि। (प्रकाशम्।) शृणु कार्यानभिज्ञे राक्षसि,

अहं हि दासो मम संगमे सुखं
न लप्स्यसे मानिनि दासदास्यतः।
नियुङ्क्ष्व मां कर्मसु राममाश्रिता
न वोढुमिच्छेः शिबिकोचितापि ताम् ॥ ४५ ॥

तदार्यमुपाश्रित्य सीतया सह स्पर्धस्व।

**शूर्पणखा**—(स्वगतम्।) साहु लक्खण, साहु (द) (पुनरपि राममेत्य।) (प्रकाशम्।) भो राम, त्वया दत्ताभयास्मि। मत्परिग्रहात्ते कथं तत्संगच्छते। बलवन्मां बाधते पञ्चशरः। तवानुजस्तु प्रथमं त्वय्युपगतां मां विज्ञाय सीतामिव माननीयां मन्यते। स कथं पुनरुपरोद्धुं शक्यः। प्रतिज्ञातं च त्वया शरणागतत्राणम्। अतो मत्स्वीकरणेन सत्यवाग्भव।

---

(थ) युक्तमुत्पश्यति क्षत्रियकुमारः। (द) साधु लक्ष्मण, साधु।

**रामः**—(सोपहासम् ।) अयि कामान्धे, न स्मरसि ' 'धर्मेण यः प्रपद्येत ' इत्युक्तम् ।

**शूर्पणखा**—भोः, कोऽत्राधर्मः ।

**रामः**—(सोत्प्रासम् ।) कथमत्रापि संशयः, परपरिग्रहः खलु भवती ।

**शूर्पणखा**—भोः, स्यान्नामायं दोषो युष्माकम् । अस्माकं पुनः

यथारुचि विहर्तव्यं स्त्रिया वा पुरुषेण वा

एष न्यायो न चास्तीह स्वपरत्वनियन्त्रणा ॥ ४६ ॥

अतः स्वैरं गृहाण माम् ।

**रामः**—शृणु पापशीले,

मानसो व्यभिचारोऽपि स्त्रिया वा पुरुषस्य वा ।

महते पातकाय स्यात्किं पुनः कायसंभृतः ॥ ४७ ॥

**सीता**—आर्यपुत्र, किमनेनासत्प्रलापेन । परिह्रियतामेषा ।

**शूर्पणखा**—(सक्रोधम् ।) अयि दुर्भगे, कथमहं ते परिहर्तव्या । प्रथमं त्वां भक्षयामि । (इति सीतासमीपमभिधावति ।)

**सीता**—(ससाध्वसम् ।) आर्यपुत्र, परित्रायस्व (इति रामं दृढं परिष्वजते ।)

**रामः**—अपेहि क्षुद्रे, अपेहि, (इति राक्षसीं निरस्य ।) लक्ष्मण, शिक्ष्यतामेषा दुष्टराक्षसी । कृतं क्रीडितेन ।

(लक्ष्मणः खड्गेन तस्या नासिकां छित्त्वा, तां विद्रावयति ।)

**रामः**—समाश्वसिहि सीते, समाश्वसिहि । विद्राविता ते सपत्नीभूता विप्रा ।

**सीता**—(चक्षुषी उन्मील्य ।) कथं परागता सा दुष्टराक्षसी । ननु पश्याद्याप्यनुपरतं मे गात्रेषु रोमहर्षम् ।

**रामः**—(सकौतुकम् ।) सीते, पश्य ममाप्यङ्केष्वविच्छिन्नं तं पुलकोद्भेदम् । तव त्रासकृतो रोमहर्षो, मम पुनः प्रमोदकृत इत्येतावान्

विशेषः । यदप्युच्यते लोके 'यदेकस्य दुःखं तदितरस्य सुखं' इति तदवितथमेव । यदिदानीं मम

भयतरलचारुतारकमुपगूढस्य त्वया प्रमोदो यः ।
चिरविरहोत्सुकदयिताश्लेषसुखं तस्य न सममपि कलया ॥

**सीता**—(सस्मितम् ।) एतेन विप्रलम्भोऽपि तव वल्लभ इव ।

**रामः**—प्रिये, न केवलमेकस्य रामस्य वल्लभो विप्रलम्भः। अपि तु सर्वस्यापि कामिसार्थस्य । यतः शृङ्गारिणाम्

न तथा रतिमाधत्ते संभोगो मनसि विप्रलम्भ इव ।
सुखपरिणामी भूयः स एव रम्यो न संभोगः ॥ ४९ ॥

(नेपथ्ये ।)

भो भो राक्षसवीराः,

रुन्द्धं पन्थानमन्धीकुरुत दश दिशः शर्करापांसुवृष्ट्या
क्षिप्त्वाग्निं पर्णशालां दहत जनकजां रक्षत स्वामिनोऽर्थे ।
कण्ठं भङ्क्त्वेक्षुभङ्गं विभजत नरयोर्मांसखण्डं समांशं
क्रुद्धो नेता खरो नः स्वसुरभिभवतः प्रस्थितः संप्रहर्तुम् ॥

**लक्ष्मणः**—(आकर्ण्य । ससंभ्रममुपसृत्य ।) आर्य, (इत्यर्धोक्ते ।)

**रामः**—वत्स, अनायासेन समुद्घाटितं द्वारमस्मत्संकल्पसिद्धेः । नूनं त्वं समर्थ एवासि रिपून्निहन्तुम् । तथापीदमायोधनं मम भागधेयमस्तु । परं च । विशिष्यतेऽद्य सीतारक्षणम् । असंनिहितश्च तातजटायुः । अतः संनिहितेऽस्मिन् पर्वतनिकुञ्जे शस्त्रपाणिरप्रमत्तो रक्ष सीताम् । अहं पुनरिदानीम्

बलमिदमितरच्च राक्षसानां ज्वलति शरार्चिषि संयुगेषु हुत्वा।
गुरुतरगुरुशासनप्रसक्तां वनवसतिं भुवनोदयेन योक्ष्ये॥५१॥

(इति शरचापहस्तो निष्क्रान्तः ।)

(निष्क्रान्ताः सर्वे ।)

इति श्रीलक्ष्मणसूरिप्रणीते पौलस्त्यवधनाटके प्रथमोऽङ्कः ।

# द्वितीयोऽङ्कः ।

---

(ततः प्रविशत्यकम्पनो नाम राक्षसः ।)

अकम्पनः—(समन्तादवलोक्य । सशोकावेगम् ।) हा किमिदमतिदारुणं वर्तते । कथं जनस्थानाधिष्ठितं कृत्स्नं कौणपानीकं मुहूर्तमात्रेण कुणपावशेषं सत्, मांसाशिनां खगमृगाणां महोत्सवस्थानं संवृत्तम् । अहो केयमवस्था ।

निर्भिन्नाभ्रखरैर्गलात्परिगलन्मांसोपदंशं नृणां
पीत्वा शोणितमट्टहासमुखरोद्गारं प्रनृत्यन्ति ये ।
तेऽमी हन्त वितन्वतेऽद्य रुधिरास्वादप्रमोदारट-
द्धाङ्क्षाक्रान्तशिरोधरा निशिचरा नृत्तं कबन्धात्मना ॥ १ ॥

(पुनर्विलोक्य । सकरुणम् ।) आः किमेतत् । सर्वतः संप्लवमानमुण्डखण्डाः शोणितवाहिनीर्विहाय न कश्चिदुपलभ्यते जीवन्नहत्यास्मिन् बलार्णवे । एवं महाप्रलयेऽप्येतद्दशावलोकनायैव न घातितोऽस्मि हतविधिना । क्वेदं चतुर्दशसहस्रयोधोपबृंहितं महावीरैः खरदूषणत्रिशिरोभिरध्यक्षितमाशरानीकं, क्व चायं नातिपरिणतो धनुर्मात्रद्वितीयो मनुष्यडिम्भः । (सविमर्शम् ।) अथ वा जगदेकवीरे तस्मिन्नप्रयोजकमेव जातिकृतं वयःकृतं वा लाघवम् । (पुनर्निध्याय ।) अन्यादृशमेव तस्यास्त्रमाहात्म्यम् । तथाहि ।

दृष्टं शस्त्रमहिद्विषोऽद्रिभिदुरं दृष्टं च चक्रं हरे-
र्दृष्टो दण्डधरस्य दण्डप्रतिमा शूलं तथा शूलिनः ।

अन्यच्च प्रधनेषु दृष्टविजयं दृष्टं वरास्त्रं मया
रामास्त्रस्य पुरस्तदेतदखिलं स्थातुं न जातु क्षमम् ॥२॥
( पुनः संस्मरणम् । ) अहो अदृष्टपूर्वोऽयमस्त्रसंयोगः ।

एकस्मिन् प्रथमेन कार्मुकभृतां रामेण मुक्ते शरे
सद्योऽसौ शतकोटिकोटिमसृजद्विद्योतयन्तीं दिशः ।
नैतद्विस्मयनीयमस्य पतनात्प्रागेव हत्वा मिथो
रामो राम इति स्वकानरिधिया लिल्युः समं यद्भटाः॥३॥
( दीर्घं निःश्वस्य । सनिर्वेदम् ।) संप्रति हि

मुनीनां निःशङ्कं प्रचयमुपयाति व्रतविधि-
स्त्रिवर्गव्यापारं प्रथयति जनोऽयं विगतभीः ।
निरातङ्कः स्वैरं चरति जितकाशी सुरगणो
भयाशङ्कातङ्काः शरणमुपसन्ना निशिचरान् ॥ ४ ॥

एवं निष्कारणमस्यानर्थव्रातस्य कारणभूता कुत्र गता सा विप्रा । ( क्षणं विभाव्य ।) नूनं जनस्थानमिव लङ्कापुरमपि नीराक्षसं विधातुमुद्यता सा कलहकन्दली ( दक्षिणतो विलोक्य ।) नन्वितः प्रहृष्टेवागच्छति सा दुर्मतिः । किमुद्योजितोऽनया रामेण सहाभियोगाय राक्षसराजः । तथा सति दुर्योग एवायं रक्षःकुलस्य । रावणसहस्रमप्येकस्य रामबाणस्यापर्याप्तमिति मे मतिः । भवतु । जानामि सर्वम् । ( इत्युपसर्पति ।)

(ततः प्रविशति यथोक्ताकारा शूर्पणखा ।)

**शूर्पणखा**—(सहर्षम् ।) सुट्ठु पडिविहिदो परिहवस्स पडीआरो । दिट्ठिआ संपादिदा वेरसुद्धी । जदो

माणे प्पडिसंमाणं तहा णिआरे णिआरं अ ।
ण प्पडिकरेइ सरिअं जो सो पुरुसाकिदी तिणत्थंबो ॥ ५ ॥

---

(क) सुष्ठु प्रतिविहितः परिभवस्य प्रतीकारः । दिष्ट्या संपादिता वैरशुद्धिः । यतः ।

अण्णं अ ।

उरओ णिसाअरो वा णिसग्गकुविदो पकोविदो हंदि ।
पढमो खु हरइ पाणे पाणे गत्तं अ पच्छिमो हरइ ॥ ६ ॥

दिट्ठिआ मं ओसिदव्वदीए ताए वइएहीए बाहजलदूसिदं मुहं पेक्खिअ तं पडिहसिस्सं, दिट्ठिअ अणंगज्जुरतत्तं मं णिक्करुणं णिक्कासिदवंदो रामस्स दइदाविरहाणिमित्तं अणंगज्जुरं पेक्खिअ अत्तणो तावं समइस्सं. दिट्ठिअ अ मह मुहे अस्ससंपादं उप्पादिदवंदो तस्स लक्खणस्स अक्खिसु उप्पादिदेहिं अस्साआरेहिं अत्तणो मुहे सोणिदं पक्खालइस्सं, साहं रावणेण सह मारीअघरं गदुअ, तं माआमिअवेसग्गहणस्स विआवारिअ पुणो इहागदह्मि, (पुरोऽवलोक्य ।) कहं एसो अकंवणो । (ससंभ्रममुपसृत्य ।) वच्छ, दिट्ठिआ इमादो महप्पलआदो णिम्मुत्तो सि । (क)

मानै प्रतिसंमानं तथा निकारे निकारं च ।
न प्रतिकरोति सदृशं यः स पुरुषाकृतिस्तृणस्तम्बः ॥ ५ ॥

अन्यच्च ।

उरगो निशाचरो वा निसर्गकुपितः प्रकोपितो हन्ति ।
प्रथमः खलु हरति प्राणान् प्राणान् गात्रं च पश्चिमो हरति ॥ ६ ॥

दिष्ट्या मामपहसितवत्यास्तस्या वैदेह्या बाष्पजलदूषितं मुखं प्रेक्ष्य तां परिहसिष्यामि, दिष्ट्या अनङ्गज्वरतप्तां मां निष्करुणं निष्कासितवतो रामस्य दयिताविरहनिमित्तमनङ्गज्वरं प्रेक्ष्य आत्मनस्तापं शमयिष्यामि । दिष्ट्या च मम मुखे अस्रसंपातमुत्पादितवतस्तस्य लक्ष्मणस्याक्ष्णोरुत्पादितैरस्रासारैरात्मनो मुखे शोणितं प्रक्षालयिष्यामि । साहं रावणेन सह मारीचगृहं गत्वा, तं मायामृगवेषग्रहणाय व्यापार्य पुनरिहागतास्मि । कथमेषोऽकम्पनः । वत्स, दिष्ट्या अस्मान्महाप्रलयान्निर्मुक्तोऽसि ।

**अकम्पनः**—(सनिर्वेदम् ।) निर्मुक्तोऽस्मि स्वजनव्यसनं वीक्षितुम्।

**शूर्पणखा**—वच्छ, मा रुवाहि । उद्दीविदो हि रावणस्स हिअए मम्महग्गी । ता अलं संदावेण । (ख)

**अकम्पनः**—कथमनेन न जानामि संतापोपशमः ।

**शूर्पणखा**—कहं ण जाणासि । पेक्ख । अज्ज खु कामादुरो रक्खसराओ माआए दे दासरहीओ वंचअंदो हठादो सीदं ओहरिस्सदि (ग)

**अकम्पनः**—ततस्ततः ।

**शूर्पणखा**—तदो अ तम्मएक्कजीविओ सो मिच्छातावसो तदवाए जलावाए पदुमं विअ सअं एव्व साणुओ मरिस्सदि (घ)

**अकम्पनः**—कथं राक्षसराजोऽपि मायया प्रतिकर्तुमिच्छति, न वीर्येण

**शूर्पणखा**—पढमं जुज्झत्थं एव्व देण आरद्धं (ङ)

**अकम्पनः**—त्वया निषिद्धः स व्यापारः ।

**शूर्पणखा**—बाढं। खरादीणं वहप्पआरं पदंसिअ णिसिद्धो। (च)

**अकम्पनः**—अपि, वञ्चनोपायं श्रोतुमिच्छामि ।

**शूर्पणखा**—(सकौतुकम् । पुरो निर्दिश्य ।) पेक्ख पेक्ख रामस्समस्स अब्भण्णे चरंदं मिअम् । (छ)

**अकम्पनः**—(विलोक्य ।) अहो अद्भुतोऽयं मृगः । कथमयं हेममयो दृश्यते । अयमेव मायाप्रयोगः ।

---

(ख) वत्स, मा रुदः। उद्दीपितो हि रावणस्य हृदये मन्मथाग्निः। तदलं संतापेन। (ग) कथं न जानासि । पश्य । अद्य खलु कामातुरो राक्षसराजो मायया तौ दाशरथी वञ्चयन् हठात्सीतामपहरिष्यति । (घ) ततश्च तन्मयैकजीवितः स मिथ्यातापसस्तदपाये जलापाये पद्ममिव स्वयमेव सानुजो मरिष्यति । (ङ) प्रथमं युद्धार्थमेव तेनारब्धम् । (च) बाढम् । खरादीनां वधप्रकारं प्रदर्श्य निषिद्धः । (छ) पश्य पश्य रामाश्रमस्याभ्यर्णे चरन्तं मृगम् ।

**शूर्पणखा**—(अशिरःकम्पम् ।) तहेव्व । (ज)

**अकम्पनः**—कस्यायं प्रयोगः स्यात् । (विमृश्य ।) मन्ये मायानिधेर्मारीचस्येति ।

**शूर्पणखा**—को अण्णो एवंविहमाआप्पओएसु णिउणो । (झ)

**अकम्पनः**—कुत्रेदानीं राजा ।

**शूर्पणखा**—णं एदस्स अस्समस्स पेरंदे तिरक्खरणीए सरहं अप्पाणं पच्छादिअ ताणं रामलक्खणाण अवक्कमणं पडिवालिअ चिट्ठइ । (ञ)

**अकम्पनः**—अस्ति ते शेषं संविधानकम् ।

**शूर्पणखा**—णं मए पढमं सीदाए हिअअं आविसिअ समए परुसेहिं अक्खरेहिं लक्खणो विघडणिज्जो । तदो सुहं रावणेण सीदाइं ओहरिदाइं, तं अण्णेसंदो दे मिच्छातावसे मारेदुं कबंधो पवट्टइदव्वो । (ट)

**अकम्पनः**—अहमपि तत्र यथाशक्ति उपकरिष्ये ।

**शूर्पणखा**—कहं विअ । (ठ)

**अकम्पनः**—अस्ति सिंहिका नाम छायाकर्षिणी समुद्रमध्ये जलेशया राक्षसी ।

**शूर्पणखा**—तए किं कादव्वम् । (ड)

**अकम्पनः**—यदि कश्चिद्रामकार्येण समुद्रं लङ्घयन् दृश्येत, तं छायाकर्षणेन व्यापादयेति तां व्यापारयामि ।

(ज) तथैव । (झ) कोऽन्य एवंविधमायाप्रयोगेषु निपुणः । (ञ) नन्वेतस्याश्रमस्य पर्यन्ते तिरस्करण्या सरभसमात्मानं प्रच्छाद्य, तयो रामलक्ष्मणयोरपक्रमणं प्रतिपाल्य तिष्ठति । (ट) ननु मया प्रथमं सीताया हृदयमाविश्य, समये परुषैरक्षरैर्लक्ष्मणो विघटनीयः । ततः सुखं रावणेन सीतायामपहृतायां, तामन्विष्यन्तौ तौ मिथ्यातापसौ मारयितुं कबन्धः प्रवर्तयितव्यः (ठ) कथमिव । (ड) तया किं कर्तव्यम् ।

**शूर्पणखा**—कहं समुद्ददुग्गगुत्तं अह्माणं पुरं माणुसो तस्स जणो वा आअमिस्सदि । (ढ)

**अकम्पनः**—अयि, कथमेवं मन्यसे । शृणु

**नरश्चैको रामो वयमपि नराशाः सुबहलाः**
**शरश्चैको नान्यो बत मृतकशेषं बलमिदम् ।**
**विपर्यस्ते काले कियदुदधिदुर्गं रघुशिशो-**
**रलं तत्संबन्धात्तृणमपि महीमन्यथयितुम् ॥ ७ ॥**

**शूर्पणखा**—(सावेगम् ।) जइ एव्वं अहं वि लंगाहिदेवदं तत्थ आअदे रामसंबंधिम्मि जणे पहत्तुं णिओअइस्सं। (ण)

**अकम्पनः**—भद्रे, तथा क्रियताम् । एहि गच्छावः (इति निष्क्रान्तौ।)

(मिश्रविष्कम्भः ।)

( ततः प्रविशति मृगवेषधारी मारीचः ।)

**मारीचः**—कष्टं भो कष्टम् ।

**जानन् को मदने पिपासति जनो हालाहलं दुर्जरं**
**जानन् कस्तरते यमस्य पतितुं व्यात्ताननस्यानने ।**
**योऽहं संप्रति शक्रदाहितरुजे धावामि शुष्काशनि-**
**क्रूरे राक्षसमारकास्त्रदहनज्वाले पतङ्गायितुम् ॥ ८ ॥**

(विमृश्य।) अहो अविवेकिता राक्षसराजस्य, यदयं ताटकावधादिखरादिनिग्रहान्तं रामस्य विक्रमजातं मुहुर्मुहुरुदाह्रियमाणमप्यनवधार्य, तद्दाराहरणमेव समर्थं प्रतिविधानं समर्थयामास । कामान्धाः किमपि न परामृशन्तीत्यत्रायमेव प्रथमोदाहरणम् । यतः

(ढ) कथं समुद्रदुर्गगुप्तमस्माकं पुरं मानुषस्तस्य जनो वा आगमिष्यति (ण) यद्येवं, अहमपि लङ्काधिदेवतां तत्रागते रामसंबन्धिनि जने प्रहर्तुं नियोजयिष्यामि ।

निकारं जायाया लघुरपि न मृष्येत्कथमसौ
श्रियोऽपि प्रेयस्या जगति सहतामप्रतिभटः ।
कथं सा वा सुभ्रूरिममधिगुणानामधिगुणं
पतिं लब्ध्वा पुण्यैः सुहितहृदयान्यत्र रमताम् ॥ ९ ॥

एतावन्मात्रमपि स्वयमालोचयितुमक्षमस्य हितोपदेशमप्यशृण्वतस्तस्य रावणस्य श्रममात्रफलकं संवृत्तं चरितव्रतत्वादिकम् । अथ वा स्थाने खल्वेतत् ।

किं तस्याध्ययनादिभिः सुचरितैरर्थो वृथा क्लेशदै-
र्जात्यन्धस्य यथा रनेत्रमणिभिर्यस्य स्वयं नास्ति धीः ।
पाण्डित्यं ननु मूर्खतापहरं तेनैव रक्षःपते-
र्घूकस्येव तमस्तमोऽपहरुचा गाढं निमृष्टं दृशि ॥ १० ॥

अथवा किमस्योपालम्भेन । भवितव्यता हि मनीषिणमप्यन्यथा प्रवर्तयति । प्रवर्धमानं रक्षःकुलं क्षयं निनीषोर्दैवहतकस्यैवायं व्यपदेशः । तत्किं परिदेवितेन । (पुरोऽवलोक्य । समयम् ।) कथमत्रैव सीतया समं संलपंस्तिष्ठति स दुरात्मा रामः। अथवा नायं दुरात्मा, महात्मा खलु।

य एषः

नाधर्मेण हिनस्ति कञ्चन सदा जागर्ति दीनावने
वर्म क्षान्तिमयं बिभर्ति पुरुषाकारोऽपि वीरो रसः ।
दौर्जन्याद्सहिष्णवो वयममी स्पर्धामहे हन्त वा
प्रायो मत्सरिणः परस्य न गुणान् पश्यन्ति दृश्यानपि ॥

अत एवैवमस्य मायामृगरूपेण प्रलोभ्याश्रमाद्रामलक्ष्मणयोरपनयनरूपस्य पौलस्त्यमतस्याचरणेऽनाचरणेऽपि सर्वथा निर्बन्धेन निश्चिते मम व्यपाये, पापात्मना रावणेन वधाद्वरं महात्मना रामेण निधनमिति निश्चित्यानेन मृगरूपेण प्रवृत्तोऽस्मि । अतः स्वव्यापारमनुष्ठाय पारलौकिकीं सिद्धिमाहरामि । यथा तथा वा भवतु राक्षसकथा । (इति क्रीडन् धावति ।)

( ततः प्रविशति सीतया सह रामः । )

**रामः**—( स्पर्शसुखमभिनीय, साह्लादम् । ) अयि जानकि, अधुना हि

**उत्कल्लोलप्रतिभटचमूमन्थनप्रीतिदायं**
**गाढाश्लेषरतिषु चटुभिः प्रार्थनीयं मया ते ।**
**स्मृत्वा भूयः समरघटनालालसं मानसं मे**
**करयोत्कण्ठामभिमतरसास्वादलाभो म धत्ते ॥ १२ ॥**

**सीता**—( सोत्प्रासम् । ) आर्यपुत्र, अचिरेण शमयिष्यति तवेमा-मुत्कण्ठां कलहप्रिया सा विधिरेव ।

**रामः**—ननु प्रिये, त्वदधीनैव ममोत्कण्ठा तदुपशान्तिश्च । अत एव सर्वथा त्वदाराधने यत्ताः स्मः ।

**सीता**—( पुरोऽवलोक्य । सस्पृहम् । ) आर्यपुत्र, यदि तथा, तर्ह्या-राधय मामनेनाद्भुताकारेण मृगेण ।

**रामः**—( विलोक्य । सविस्मयम् । ) नूनमद्भुताकारोऽयं मृगः । अस्य हि हिरण्मयचर्मपिनद्धं सर्वगात्रमपि, अन्तरान्तरा रजतबिन्दुभिर्विराजमानं खुरशृङ्गादिषु च वैडूर्यादिमणिशकलैः संयोजितं सन्नितरां मनोहारि भवति । अतिसुलभं चानेन तवाराधनम् । ( पुनर्निरूप्य । सश्लाघं सवितर्कं च ) अहो अद्भुता सृष्टिः । अयि दयिते,

**किं दत्तो वनवासबन्धुभिरतिप्रीतैरयं तापसै-**
**रस्वप्नैरुत वा निशाचरवधप्रेम्णोपहारीकृतः ।**
**स्रष्टुः किं रचनास्वयं चतुरिमा लोकोत्तरस्त्वं यथा**
**किं वास्मच्छलनेच्छया शठधियां मायाप्रयोगो द्विषाम् ॥**

( प्रविश्य । )

**लक्ष्मणः**—आर्य, नूनं मायाप्रयोग एवायम् ।

**रामः**—प्रिये, ( इति तन्मुखं पश्यति । )

**सीता**—आर्यपुत्र, विनैव बलवता संशयकारणेन, अकस्मात्त्वच्चित्तोपारोपणे न व्याप्रियते मे मनः। अतो मन्ये मृग एवायम्।

**लक्ष्मणः**—नन्वार्ये, अस्य हि चोरस्येवान्तर्बलवदातङ्कमासूचयता पारिप्लवेन चक्षुषा निःसंशयमवेद्यत एवापरमार्थत्वम्।

**सीता**—ननु भोः सौमित्रे, सहजमेव खलु मृगसामान्यस्याधीरविप्रेक्षितम्। अतो न पर्याप्तमेतत्कारणमन्यथा कल्पनस्य।

**रामः**—(सस्मितम्।) तर्हि श्रोतव्यमिदानीमेतं हरिणमन्तरेण युवयोरनुमानसाधनम्।

**लक्ष्मणः**—आर्य, ब्रह्मसृष्टिवैलक्षण्येन कथमेतस्यैव केवलं हिरण्मयत्वम्। अतस्तत्र तथा। खरादिनिधनकुपितस्यापि साक्षात्त्वयि प्रहर्तुमक्षमस्य कस्यचिन्निशाचरस्यायं मायाप्रयोगः।

**सीता**—कथमस्य ब्रह्मसृष्टिवैलक्षण्येनेदं रूपमित्युच्यते। ननु दृश्यन्ते हि चराचरेषु सर्वत्र रत्नजातानि। तदलमन्यथाग्रहेण।

**रामः**—वयं पुनरधुना तटस्थवृत्तयः संवृत्ताः स्मः। तथा हि

निकृतिषु निपुणाश्च भूरिमाया
रजनिचरा हि किमेष तत्प्रयोगः।
गिरिनरुकमलानि जातरूपै-
र्विरचयतः किमयं विधेर्विनोदः॥ १४॥

(क्षणं विमृश्य।) वत्स लक्ष्मण, किमनेन विमर्शेन। संपादनीयं हि वनवासबन्धोरस्याः प्रथममभ्यर्थितम्। ततश्च

आस्तामयं तृणचरो रजनीचरो वा
कान्तामनेन रमयाम्यथवा कृतान्तम्।
न्यासस्त्वयीयमबला मम जीवितस्वं
मा भून्ममैव विगमो मृगतृष्णया ते॥ १५॥

(इति शरचापहस्तो मृगमनुसरन्निष्क्रान्तः।)

**सीता** — भोः सौमित्रे, किं गृहीतः सारङ्गः ।

**लक्ष्मणः** —( सुदूरं चक्षुर्निक्षिप्य ।) आर्ये, श्रूयताम् ।

धावन् खेलत्प्लुतिभिरटवीं द्राक् परावर्तमानो
हस्ताभ्याशे मुहुरभिपतन् वर्धयन् शश्वदाशाम् ।
दृश्यादृश्यः क्वचिदतिजवः क्वापि मन्दायमानो
दूराद्दूरं हरति हरिणो राघवं लाघवेन ॥ १६ ॥

**सीता** —( साशङ्कम् ।) तत्किमसावाशरः स्यात् ।

**लक्ष्मणः**—आर्ये, आशर एवायम् ।

**सीता** —( सभयम् ।) यद्येवं, तर्हि राममभ्युपपत्तुमर्हसि ।

**लक्ष्मणः**—आर्ये, विश्रब्धा भव । कस्य वा शक्तिरस्ति राममभिभवितुमपि । तस्मिन्नशक्तश्चैवायं छद्मप्रयोगः । यतः शत्रुः

प्रगल्भो वीर्येण प्रतिकृतिपरोऽस्मद्विधैरिव
प्रहीणः साधुश्चेदभिलषति साम्नैव कृतिताम् ।
प्रदानैर्वा वैरं शमयति बलाढ्यो यदि रिपुः
त्वयं क्षुद्रः पन्थाः कुमृतिशरणानां बहुमतः ॥ १७ ॥

( नेपथ्ये ।)

हा सीते, हा लक्ष्मण ।

**सीता**—( आकर्ण्य, ससम्भ्रमम् ।) अयि सौमित्रे, श्रूयते हि तवार्यस्यार्तपरिदेवितम् । नूनमयं केनापि व्यापाद्यते रक्षसा । तदेनं शीघ्रमभ्युपपद्यस्व ।

**लक्ष्मणः** —आर्ये, तर्हि मशकेन मत्तगजोऽपि निष्पिष्येत । स्थिरा भव । न किञ्चिदेतत् ।

**सीता**—( सव्यथम् ।) अयि, कथमेवमस्मदाह्वानपूर्वकं तदीयमाक्रन्दितमवकर्ण्याप्यसंभ्रान्तोऽपि । पर्याकुलीभवति मे मतिः ।

**लक्ष्मणः** — आर्ये, नायमार्यस्य स्वरः । इदमपि मायाविनां

प्रयोगान्तरम् । तत्स्वरसंवादेन त्वं बिभेषि । तन्मास्तु ।

कुरुतां स्वरसंवादं तथापि नालं प्रहर्तुमयमार्ये ।
कथमपि नादविडम्बी क्रोष्टा किं सिंहविक्रमं कुरुते ॥ १८ ॥

सीता—( सक्रोधम् । ) अयि, परमार्थोऽपरमार्थो वास्तामयं स्वरः, किमनेन तव शुष्कतर्केण । सत्वरमन्विष्यतामार्यः ।

लक्ष्मणः—आर्ये, नायं शुष्कतर्कः । पश्य

रूपेण वञ्चिते रामे मयि च ध्वनिनामुना ।
शून्ये शुनेव पापेन त्वयि पापं चिकीर्षितम् ॥ १९ ॥

तदलं संरम्भेण । क्षणं तूष्णीं भव । तावदेव समागमिष्यति रामः ।

सीता—( सक्रोधं दीर्घं निःश्वस्य । ) अयि, किमिदं ते व्यवसितम् ।

अन्धे कूपे पतितं स्वबन्धुमुद्धर्तुमकृतवेगस्य ।
बालिश्यात्किमुदेशा

लक्ष्मणः—आर्ये, किमेवमनर्हमधिक्षिपासि ।

सीता— ज्ञातेयाद्वाभिकाङ्क्षतो व्यसनम् ॥ २० ॥

लक्ष्मणः—( सव्यथम् । ) कथं परोभाग्येऽपि प्रसरति ते जिह्वा । शृणु ।

नाहं विमातृवरतो न पितुर्नियोगा-
द्रामस्य वा न वचनाद्भरते न दोषात् ।
अभ्यागतोऽस्मि रघुनायकपादसेवा-
लौल्यादतो न विषमा मयि तेऽस्तु दृष्टिः ॥ २१ ॥

सीता—( सक्रोधतर्जनम् । ) कथमद्यापि स्थीयत एव न प्रस्थीयते ।

लक्ष्मणः—( सानुनयम् । ) आर्ये, मास्तु संरम्भः ।

नन्वर्पितासि गुरुणा मयि गौरवेण
तामामिषीकृतवता भवतीमरीणाम् ।

द्रष्टुं पुनः कथमनेन जनेन शक्यं
व्यापारलोपकुपितस्य मुखं विनेतुः ॥ २२ ॥

**सीता**—आः किमेतत्। हा प्राणनाथ, किं करोम्यहम्। घूर्णयति मां त्वदीयमाक्रन्दितम्। अयं तव भ्रातृच्छद्मा स्वयमकम्पित एव किमपि किमपि समर्थनाक्षरप्रायं मन्त्रयते।

**लक्ष्मणः**—आर्ये, न किमपि ते भर्तुरत्याहितम्। किं वृथात्मानं क्लेशयसि। आगतप्रायो ह्यार्यः। त्वया च प्रत्यक्षितमेव खरवधे तस्य वीर्यम्। यदि ते स्त्रीस्वभावकृतं कातर्यम्, तथापि श्रद्धत्स्व मे वचनम्। अहमस्मि तत्र प्रतिभूः।

**सीता**—(सक्रोधाट्टहासम्।) अरे त्वं रामस्य प्रतिभूः। निर्ज्ञातं ते दौरात्म्यमधुना। एहि मन्ये जानकीमुपभोक्ष्यसे। पतिदेवता हि सा। अयि क्षुद्र, कथं दाशरथित्वसामान्येनात्मानं रामं मन्यसे।

संलालनाय नवशोणितशीधुपानै-
रन्विष्यमाणकरिणा हरिणोपभुक्ता।
सिंही तु वानचरणाग्रनखेन वापि
स्प्रष्टुं मृगालशिशुकं स्पृहयेन्न जातु ॥ २३ ॥

हा प्राणनाथ, मायानृतशाठ्यचौर्यप्रायेऽस्मिन् जगति केवलमार्जवैकपरायणस्त्वं सर्वात्मना विपन्नोऽसि।

सपत्न्या वञ्चितं राज्यं सपत्नैस्त्वं च वञ्चितः।
सापत्नेन सपत्नेन तव दाराश्च वञ्चिताः ॥ २४ ॥

(इति सोरस्ताडमुच्चैराक्रोशति।)

**लक्ष्मणः**—(सजुगुप्सं सनिर्वेदं च। कर्णौ पिधाय।) आः किमेवमसत्कल्पनादोषैरभिशंसितुमारभ्यासि। अनभ्यन्तरः खल्वीदृशानां पातकव्याहाराणां सुमित्रापुत्रः। किमितः परमिह स्थितेन। भो भो वृत्तसाक्षिणो लोकपालाः, शृणुतावधत्त च।

मम जनकजा माता रामः पिता न तयोरघं
स्मरति मम धीः पापच्येयान्यथा निरयाग्निषु ।
कटुकवचनैर्मुञ्चाम्येनामतीत्य गिरं गुरो-
रवत दयया देवा देवीभिर्मा विजने वने ॥ २५ ॥

(इति कतिचित्पदानि गत्वा, पुनर्निवृत्य ।)

पश्यामि वा कुशलिनीं जनकेन्द्रपुत्रीं
रामेण साकमभुना पुनराश्रमेऽस्मिन् ।
किं वा करोमि न जहामि जहामि वैनां
संतप्यते हि हृदयं विषशल्यविद्धम् ॥ २६ ॥

तदार्यमेव गच्छामि। (इति रामस्य पन्थानमनुसरन्निष्क्रान्तः ।)

(ततः प्रविशति परिव्राजकवेषेण रावणः ।)

**रावणः**—(सौत्सुक्यम् ।)

यदा सीता नाम श्रवणमुपयाता वरतनू-
स्तदा भोगासङ्गं श्लथयदथ संसच्चरतिभाक् ।
क्रियामन्दं स्वान्तं यमिन इव मे ध्याननिभृतं
समं सर्वं तन्निर्विषयकमिदं तुच्छविषयम् ॥ २७ ॥

(क्षणं विभाव्य । साक्षेपम् ।) अथ वा 'तुच्छविषयं' इत्येतदेव तुच्छम् ।

कामं जल्पतु जल्पवञ्चितमतिर्नास्त्यस्तिवादाहतं
ब्रह्मानन्दमनुत्तमं परतरं कान्तासुखं मन्महे ।
एतत्केवलमा विरिञ्चभवनादा नागलोकाज्जनै-
र्भूयो भूय इति प्रसञ्जितरसैः सस्वादमास्वाद्यते ॥२८॥

यच्च परदारा न गन्तव्या इति तदप्यप्रगल्भमात्ररमणीयम् ।

अहल्यां योऽयासीदधिपतिरशेषक्रतुभुजा-
मपास्तः किं गोप्त्या अशुभचरितोऽसाविति सुरैः ।

मुनिः प्रत्याहार्षीत्किमु निजवधूसङ्गजफलं
मुखं भोक्तुं हन्ते व्यसनमितरस्येति विहितम् ॥ २९ ॥

वयमपि तन्मार्गमनुरुध्यमानाश्छद्मना रामदारानपहर्तुमुद्यताः स्मः । (परिक्रम्यावलोक्य च । सकौतुकम् ।) कथं पुरोभागवर्तिनी मे प्रार्थितसिद्धिः । यदियं द्वारदेशमलंकुरुते मे मनोरथनिम्नाभूमिः सुन्दरी । (पूर्णं निर्वर्ण्य ।) अहो रूपम् । नूनमस्याः

अङ्गैरेभिः किमपि तुलनां वस्तु नारोढुमीष्टे
चन्द्राम्भोजप्रभृतिषु परं लोकसिद्धोपमासु ।
सृष्ट्वा सृष्ट्वा ललितवनिता अप्रतुष्यन्नथेमां
कृत्वात्मानं कृतिषु कृतिनं मन्यते सर्गकर्ता ॥ ३० ॥

अपर्याप्तान्येव मे विंशतिरप्यक्षीणि अस्या रूपनिरूपणे । किं पुनरेतद्वेषोचितमिदमक्षिद्वितयम् । (पुनर्विभाव्य ।) कथमियं समीपगतमपि मां न पश्यति । (विमृश्य ।) ज्ञातम् । स्वभर्तुः पथि निहितावधाना तदेकदृष्टिर्वर्तते । नूनमियं बलवदभिनिविष्टचित्ता कार्पण्यैकशरण्येऽपि तस्मिन्मिथ्याप्रव्रजिते । अहो अनुचितसंयोजकता विधातुः, यदेष देवजातिष्वप्यसुलभरूपामेनां फलमूलाशिनः स्वभूतां संयोजयामास । अहो अस्य रामस्य भाग्यम् । यतः

यदि स्पर्शोऽमुष्या वपुषि मम केनापि वपुषा
तदर्थे मे दद्यां प्रतिफलतया जीवितमपि ।
तया वारं वारं सरसमुपगूढः कथमसौ
न धन्यानां धन्यो भजतु न च वा श्रीः किमनया ॥ ३१ ॥

(सामर्षम् ।) यस्य हस्तादाच्छिद्य हठादनुभोक्तव्यमिदं रत्नं, किं तस्य प्रशंसया, प्रस्तुतप्रतीपं खल्वेतत् । यावदसौ वटुर्नायातः, तावदेनां हरामि । (इत्युपसर्पति ।)

**सीता**—(अवलोक्य । सबहुमानम् ।) कथं परिव्राजक आगच्छति ।

मान्योपचारेषु प्रणयवान् खलु मे गुरुर्मिथिलेश्वरो, विशेषतो मम प्राणेश्वरश्च । तदसंभावनाकृतोऽपचारो मा स्पृशतु। तद्यावद्भर्तुरागमनं तावदेनमुपचरामि (उपसृत्य ।) भगवन्, प्रणमामि ।

**रावण**.—(सपुलकोद्भेदमात्मगतम् ।)

**ये पूरिते सुकण्ठ्याः प्रथमालापेन ते मम श्रवसी ।**
**धन्ये उभे हि शेषाण्यवयवसाकल्यसंपदर्थानि ॥ ३२ ॥**

एवं विनयमाचरन्त्या अस्या आत्मच्छन्दानुरूपमाशास्महे । (प्रकाशम् ।) अयि बाले,

**दोर्भ्यामुदञ्चितधरोरुभरेण खेला·**
**त्क्षेमंकरेण भुवि पुण्यजनव्रजस्य ।**
**ओजायमानमहसा दिशि दक्षिणस्यां**
**त्वज्जीवितेन दयितेन विलासभीया· ॥ ३३ ॥**

**सीता**—(सस्मितम् ।) अहो, अनुभवसंवादी भगवदाशीर्वादः ।

**रावणः**—(स्वगतम् ।) कथमनुभवसंवादीत्याह । (विमृश्य ।) धिक् धिक् । कथमुभयोः समानमाशासनम् । (सासूयम् ।) अथ कदाचिद्राममात्रे चरितार्थमिदमाशासनं स्यात् ।

**सीता**—भगवन्, कः संदेहोऽत्र ।

**रावणः**—(स्वगतम् ।) अहो दुष्टोपश्रुतिः, राममात्रवृत्तिकमिदमाशासनमित्यत्र नास्ति संदेहः (प्रकाशम् ।) अयि कुत्र संदेहो नास्ति ।

**सीता**—नन्वनुभूयत एवेदम् । स मे प्राणवल्लभः सानुजः शीघ्रमागमिष्यति । तावदासनपरिग्रहेण पावयतु भगवानिमां बहिःप्रकोष्ठवेदिकाम् ।

**रावणः**—अयि कल्याणि, अनतिलङ्घनीयस्तवायं प्रथमः प्रणयः। (इत्युपविश्य ।) भद्रे, इच्छामि तवाभिजनादि श्रोतुम् ।

**सीता**—शृणोतु भगवान्। अपि जानाति भगवांस्तत्रभवन्तं विदेहाधिपम्।

**रावणः**—कस्तं न जानाति। स हि गृहाश्रमयति।

**सीता**—तस्मिंश्च

सीरेण कर्षति महीं यजनाय राज्ञि
सीरध्वजे हलमुखादहमुत्थितास्मि।

**रावणः**—(सकौतुकमात्मगतम्।) किमियमपि मन्दोदरीवायोनिजा, (प्रकाशम्।) अयि देवयजनसंभवे, भृशं कुतूहलितोऽस्मि ते जन्मश्रवणेन। अतः शेषमपि कथय।

**सीता**—

सीतेति मां तत उशन्ति

**रावणः**—(सश्लाघम्।) अयि सीते, सम्यक् शोभसे उत्पत्त्यनुरूपेण नामधेयेन। अथ संप्रदानविधिमपि श्रोतुमुत्कण्ठते मे मनः।

**सीता**— महेशचापं
शुल्कं मम प्रहविधौ व्यधित क्षितीशः॥ १४॥

**रावणः** — (सखेदमात्मगतम्।) कथमसावस्माभिरप्यप्रकम्प्यस्य शिवचापस्यारोपयिता रामः।

**सीता**—(स्वगतम्।) नूनमयं जीर्णस्य तस्य धनुषः समारोपणे का प्रशस्तिरिति मन्यते। एतदेव जामदग्न्येनाप्युदाहृतम्। तदेवं पृच्छामि (प्रकाशम्।) कथं मम शुल्कश्रवणेन नातिप्रीत इव भगवान्।

**रावणः**—(सावहित्थमात्मगतम्।) कथं विदितोऽस्मि। (प्रकाशम्।) न किंचिदन्यत्। अथ कतमस्ते शुल्कप्रदाता।

**सीता**—(सबहुमानम्।) जगदेकवीरो रामः।

**रावणः**—कथं जामदग्न्यमुनिः।

**सीता**—(सस्मितम् ।) न हि न हि । तस्य दमयिता दाशरथि-रामो मे विवोढा ।

**रावणः**—(सचिन्तावेगमात्मगतम् ।) कथं हैहयशत्रोर्भार्गवस्यापि दमयितैष क्षत्रियवटुः । तर्हि दमितप्रायमनेन त्रिभुवनमपि ।

**सीता**—(स्वगतम् ।) किमद्याप्ययं सचिन्त इव । (प्रकाशम् ।) भगवन्, मम शुल्कश्रवणादारभ्य निरुत्साहमिव भवन्तं लक्षयामि । अतो ज्ञातुमिच्छामि तत्र कारणम् ।

**रावणः**—(स्वगतम् ।) अनेनात्मगोपनोपायभूतेनापह्नवेनैना-मुद्वेजयामि, ततः सुकरं स्यादात्मनोऽभिप्रायं निवेदयितुं साधयितुं च । (प्रकाशम् ।) भद्रे, [illegible] न [illegible] मद्भूतम् ।

**सीता**—[illegible] भगवतो [illegible]नम् ।

**रावणः**—भद्रे, किमन्यत् । प्रथमो हि माहेश्वराणां स महीश्वरो मैथिलः ।

**सीता**—भगवन्, आं तथैव ।

**रावणः**—स कथमेवं शिवापराधस्य कर्ता बभूवेति व्यथितोऽस्मि ।

**सीता**—(साशङ्कम् ।) न जाने कथमत्रापराध इति ।

**रावणः**—किं न जानीषे । नन्वर्चार्थं युष्मत्पूर्वपुरुषे देवराते न्यासीकृतमिदं धनुः, न तु कुटुम्बचर्चार्थम् ।

**सीता**—(साभ्युपगमम् ।) श्रुतं चैतन्मया तातपादात् ।

**रावणः**—सामान्यस्यापि परद्रव्यस्य

न्यासीकृतस्य पणनेऽपि महान् हि दोष-

स्तस्यैव किं पुनरनारतमर्च्यधाम्नः ।

**सीता**—(सभयम् ।) भगवन्, ततः किं स्यात् ।

**रावणः**—

आगो नयैः शमयिता न गरं जनोऽयं
व्यत्यस्यते तदुभयं च शिवे शुभाङ्गि ॥ २५ ॥

**सीता**— (सत्रासम् ।) व्यत्यस्यत इत्येतावता न निश्चितम्। अतः सम्यक् व्याचष्टां भगवान् शिवापराधे किं भवति ।

**रावणः** —(स्वगतम् ।) नूनं त्रस्तेयम् । तदत्रापश्चनच्छलेन बलवत्त्रासयामि। ततश्च सुलभा मे सिद्धिः । (प्रकाशम् ।) शृणु यद्भवति ।

भ्रंशः श्रियो भवति च व्यसनं गुरूणां
कृच्छ्रेषु कृच्छ्रवसतिर्द्विषतोऽभियोगः ।
प्राणच्युतिश्च्युतिरुतात्मसमानबन्धो-
रेकोऽपि हन्त बहु हन्ति शिवापराधः ॥ २६ ॥

**सीता**—(सभयकम्पमात्मगतम् ।) राज्यभ्रंशाद्द्विषदभियोगान्तमप्यपराधफलं मन्ये । किं शेषद्वयमपि समापतिष्यति । आर्यपुत्रोऽप्यार्तमाक्रन्दति स्म । हा किं करोमि । अथवा पृच्छाम्येनं तत्परिहारमपि। (प्रकाशम् ।) भगवन्, कस्तर्हि तस्य निवृत्त्युपायः ।

**रावणः**—(स्वगतम् ।) नूनं मम वर्त्मनि समापतिता (प्रकाशम् ।) माहेश्वराराधनादृते कोऽन्यस्तत्रोपायोऽस्ति ।

**सीता** - तर्हि भगवन्तमपि माहेश्वरमेव तर्कयामि ।

**रावणः**—कथमत्रापि संदेहः । माहेश्वराग्रगण्या हि वयम् ।

**सीता**—तेन हि क्षणं प्रतीक्षतां भगवान् । आगतप्रायो मे नाथः ।

**रावणः** —(स्मृतिमभिनीय । सभयं समन्तादवलोक्य) कथमागतः स दुष्टक्षत्रियः । मया पुनरस्याः संभाषणविस्मृतात्मना विलम्ब्यते । (प्रकाशम् ।) न हि प्रतीक्ष्याः प्रतीक्षन्ते । परं च । अस्मदाराधनचतुरायां त्वयि संनिहितायां, किमन्यप्रतीक्षणेन । अतः शमय पिपासामातिथ्येन, यद्यस्मानाराधयसि (इत्युत्तिष्ठति ।)

**सीता**—भगवन्, यदि क्षणमात्रं प्रतीक्षितुं न सहसे, तर्हि प्रतिगृह्यताममृतोपमरसमिदं फलं, इदं पानीयं च (इति फलाद्यर्पयति।)

**रावणः**—अयि सुन्दरि,

किं फल्गुभिः फलैर्मे नादेयैर्वा जलैरनादेयैः
अधरीकृतामृतरसैः शमयाधरबिम्बफलरसैस्तृष्णाम् ॥ १७ ॥

**सीता**—(सक्रोधम्।) हुम्। अयि धूर्त तुरीयाश्रमदूषण, आः पातकिन्, धिक्त्वाम्। एष दम्यसे। (सनिर्भर्त्सनं परावृत्य, रामस्य पन्थानमीक्षते)

**रावणः**—अयि भामिनि, कथं परिव्राजको मां प्रार्थयत इति जुगुप्सया कुध्यसि। पश्य माम्।

नाहं कोऽपि त्रिदण्डी प्रतिगृहमनिशं भिक्षयाहिण्डमानो
रक्षोनेता विनेता त्रिदशपरिषदां रावणोऽस्म्युग्रतेजाः।
स त्वां याचे स्मरार्तस्त्रिजगति पुलिनश्रोणि ये दुर्लभाः स्युः
कामास्ते त्वां भजन्तां मयि लल ललने कर्मदासोऽस्म्यहं ते॥

(इति स्वरूपग्रहणपूर्वकं पादयोः पतति।)

**सीता**—(सोद्वेगम्।) आर्यपुत्र, अहं पलाशिना व्यापाद्ये (इति हस्तौ व्याधूय पलायितुमारभते।)

**रावणः**—(सरभसं तामङ्केनादाय।) अयि भीरु,

पुरुषादभयं त्यजेरहं तव भोगे प्रवणो न भोजने।
परुषोऽपि विधुंतुदो नवां सुभगामिन्दुकलां न बाधते ॥१९॥

(इति तां रथं नयति।)

**सीता**—(मुहुर्मुहुर्मुखमुरश्चाघ्नाना।)

हा हा हतास्मि मुषितास्मि विलुण्ठितास्मि
निर्मन्थितास्मि निरये विनिपातितास्मि।

हा राम लक्ष्मण हतास्मि हहा हतास्मि
हा तात मामव खगाधिप हा जटायो ॥ ४० ॥

इत्युच्चैराक्रन्दति ।)

(ततः प्रविशति जटायुः ।)

**जटायुः**—अहं खल्वार्यस्य संपातेर्निषेवणानन्तरं निशाकरनामानं मुनिं वन्दितुं गतः । तत्र 'मायया राघवौ वञ्चयित्वा रावणेन सीतापह्रियते' इत्यवगत्य सत्वरं पञ्चवटीमभिपतितोऽस्मि। (समन्तादवलोक्य।) कथमित एवाकाशयानेन सीतामपहरन् दक्षिणाभिमुखं पलायते । (सरभसमुच्चैः ।) रे रे परदारचोर राक्षसाधम, दशकन्धर, क्व गमिष्यस्यविपन्नायुषि जटायुषि, अयमिदानीम्

वज्रीव ग्रावकूटान् दिशि दिशि विकिरन् खण्डितांस्तुण्डखण्डान्
लून्वा लूत्वा विधून्वंस्तव भुजग भुजान् पन्नगाशीव नागान् ।
भित्त्वोरः कोष्णमस्रं पिबति नरहरिक्रीडया क्रोडितान्त्रः
श्यैनेयस्तिष्ठ तिष्ठ क्व नु पतसि विभो श्चोरयन् धर्मदारान् ॥

(इति निष्क्रान्तः ।)

(निष्क्रान्ताः सर्वे ।)

इति श्रीलक्ष्मणसूरिप्रणीते पौलस्त्यवधनाटके द्वितीयोऽङ्कः ।

## तृतीयोऽङ्कः ।

---

(ततः प्रविशति सुपार्श्वो नाम गृध्रः ।)

**सुपार्श्वः**—अहं खलु निर्दग्धपक्षतया स्वयमाहारमर्जयितुमक्षमस्य मम पितुर्गृध्रराजस्य सम्पातेरामिषार्थं महेन्द्रगिरेर्गुहामुखे तिष्ठन्, तत्र हा हेत्याक्रोशन्तीं कामपि वनितामादायाभिपतन्तं कमपि राक्षसं वीक्ष्य पुष्कलमिदमामिषमिति सहसा प्रतिनुमारब्धोऽस्मि । ततश्च पादपतनपूर्वकं तेनाभ्यर्थितस्य मे सामिनिगीर्णेऽपि तस्मिन् दया समजायत । यतः शूराणाम्

> **प्रथनरससमृद्धे प्रत्यग्रस्थानवृत्तौ**
> **प्रसरति रणचण्डश्चण्डिमा न प्रणम्रे ।**
> **प्रसभहरणदक्षं भूरुहामुच्छ्रितानां**
> **प्रणयि किमुलपस्योन्मूलने वातरंहः ॥ १ ॥**

ततस्तं सावज्ञमुत्सृज्य पुनराहारार्थं प्रवर्तमानेन मया यदृच्छया सङ्गतात्तत्रभवतो निशाकरमुनेः शिष्यादेतदधिगतम् । यथा—यो मयोत्सृष्टः स किल रावणो नाम राक्षसो रामस्य भार्यामादाय यातीति, तदाज्ञाय तस्य रामस्य प्रियसुहृन्मम पितृव्यो जटायुर्नाम गृध्रराजस्तां सीतां मोचयितुं प्रयात इति च । तदाकर्ण्य तस्माद्राक्षसाज्जटायुषः पापमाशङ्कमानोऽहं सत्वरं पञ्चवटीमागतोऽस्मि । (अग्रतोऽवलोक्य, सावितर्कम् ।) नूनमियमेव रावणजटायुषोः संग्राममभूमिः । (पुनर्निरूप्य सहर्षम् ।) अद्भुतमद्भुतम् । यतः

> **भग्नं कार्मुकमेतदेष कवचो भग्नो निषङ्गाविमौ**
> **भग्नौ तेऽतिखराः पिशाचवदना भग्नाः समूताः खराः ।**

भग्नाक्षध्वजकूबरोऽत्र शतधा भग्नः शताङ्गो रिपो-
भग्नं सर्वमभग्न एव जरसाप्यार्यस्य मे विक्रमः ॥ २ ॥

(किंचिदन्तरे चक्षुर्विक्षिप्य, सव्यथम् ।) आः शौर्यराशिस्तातजटायुरपि लूनपक्षः शेते । किमेतत् । हा तात जटायो,

श्यैनेयौ वैनतेयाविति खगपतयस्तेषु च ज्येष्ठ एकः
स्वाद्दोषात्प्लुष्टपक्षः समभवदपरो मातृदोषादनूरुः ।
यावन्यौ तत्कनिष्ठौ त्वमपि च गरुडो द्वौ युवामेकवीरौ
मृत्युस्ते तस्य नो मां व्यथयति तु परं रक्षसोऽल्पादसौ सन् ॥

(इति शोचति । पुनर्धैर्यमवलम्ब्य ।) अथ वा

युधि रिपुमुपताप्य तीर्थतीर्थीकृतचरमायुषि योगिभिर्दुरापाम् ।
परगतिमधिशय्य वीरशय्यां व्रजति जटायुषि नास्ति मे विषादः

न चेममर्थमिदानीं पित्रे निवेदयितुमिच्छामि। तथा सति महाननर्थः स्यात् । अस्य हि प्राणेभ्योऽपि प्रियतरो जटायुः । तथा हि

पतन्नुच्चैरुच्चैरभितपनबिम्बं दिवि जवा-
त्तदुस्रैस्ताम्यन्तं ज्वलनमयगर्भैः स्वमनुजम् ।
भवन् पक्षच्छायाविततिभिरुपेक्ष्यात्मविपदं
सतां भ्रातृस्नेहं परममभिधत्ते मम गुरुः ॥ ९ ॥

अतः कालेन ज्ञातार्थो भवतु । अथ किं कुरुतस्तौ राजपुत्रौ । (विलोक्य ।) कथं स्वाश्रमाभिमुखमतित्वरया समायाति रामः। लक्ष्मणोऽपि मन्दमन्दं तदभिमुखं प्रयाति । वितरन्तु धर्मात्मनोरेनयोर्मङ्गलं देवताः। अहं तावत्क्षुधा पीडितं तातसंपातिमाराधयामि। (इति निष्क्रान्तः)

( शुद्धविष्कम्भः ।)

(ततः प्रविशति यथानिर्दिष्टो रामः ।)

**रामः**—(सचिन्तावेगम् ।) कथमसौ मृगो मद्बाणसंबन्धमात्रेण

राक्षसः संवृत्तः । किं प्रयोजनमस्य परासोस्तालमात्रमुत्प्लुत्य मत्स्वरसंवादिना दीनस्वरेण सीतालक्ष्मणयोरामन्त्रणपूर्वकमाक्रन्दने । नूनं खरादिनिधनेनामर्षितस्य कस्यापि राक्षसस्यायं प्रयोगः—यत्किल मामिव लक्ष्मणमप्यपगमय्य सीतामपजिहीर्षति स पापः (साशङ्कम् ।) किं लक्ष्मणोऽनेन स्वरेण मम व्यापत्तिमाशङ्कमानः सीतामविगणय्याभिपतेत् । (पुनर्विमृश्य, सावष्टम्भम् ।) अथ वा विविक्तदर्शी खलु मे भ्राता न पुनरापातदर्शी । यतः

> जनकभुवि वदन्त्यामेणमव्याजभूतं
> छलमिदमहितानामित्यधिक्षिप्य वत्सः ।
> क्रुधि किमिति मयि देव्याः कामसंपादनायां
> व्यरमदुचितवेदी गौरवान्नैष मोहात् ॥ ६ ॥

(दुर्निमित्तानि सूचयित्वा । सविचिकित्सम् ।) किं वत्सलक्ष्मणोऽपि दुर्दैववचोदनया पर्याकुलो भूत्वा परेषामन्तरदायी स्यात् । यदेतानि वामाक्षिस्फुरणादीन्यनिमित्तानि संदृश्यन्ते (सत्वरं परिक्रामन्, पुरो लक्ष्मणमवलोक्य, सावेगम् ।) हा धिक्, हा धिक् । दत्तमन्तरमरातीनाम् । (ससंभ्रममुच्चैः ।) अयि, किमर्थं मम जीवितसर्वं विजने परित्यज्यागतोऽसि ।

( प्रविश्य । )

**लक्ष्मणः**—आर्यस्य पादमूले जीवितं परित्यक्तुम् । (इति पटान्तेन मुखमाच्छाद्य रोदिति ।)

**रामः**—अयि, किमपध्वंसिता जानकी ।

**लक्ष्मणः**—(सबाष्पम् ।) आर्य, अहमेवापध्वंसितोऽस्मि ।

**रामः**—(साशङ्कम् ।) वत्स लक्ष्मण, कथमपध्वंसितोऽसि ।

किं तेऽरिभिः परिभवः

**लक्ष्मणः**— स कथं त्वदीये

**रामः**—वृत्तो जटायुरुत वा

**लक्ष्मणः**— न हि सोऽस्य दृष्टः।

**रामः**—आर्तिः पुरे नु

**लक्ष्मणः**— न किमप्यधुना

**रामः**— किमन्यत्

**लक्ष्मण**—क्षिप्तो विदेहसुतयास्म्यपवादपङ्के॥ ७॥

**रामः**—अयि, किमस्मिन्नाक्रोशव्यतिकरे पर्याकुला, तत्प्रसङ्गेन किमपि त्वामसंबद्धमुक्तवती सीता।

**लक्ष्मणः**—आर्य, यदवाच्यं च।

**रामः**—वत्स, अलं शोकेन। तथापि तामेकाकिनीमुज्झता त्वया न समीचीनमाचरितम्। एह्येहि। न शुद्ध्यति मे मनः। (इति परिक्रम्याश्रमद्वारमवलोक्य च।) अहो किमिदम्।

प्रचलति मृगयायै यानुयान्तीव दृग्भ्यां
नयनपथमतीते बद्धलक्ष्या पदव्याम्।
अयि पुनरटवीयस्युत्सुकाभ्येति सा मे
क्षणविगमनदुःस्था नेक्ष्यते द्वारि कान्ता॥ ८॥

हा अपहृतं मे जीवितसर्वस्वम्। (इति मूर्छितः पतति।)

**लक्ष्मणः**—(ससंभ्रममुत्थाप्य।) आर्य, समाश्वसिहि।

**रामः**—(चक्षुरुन्मील्य।) हा प्रिये जानकि, क्व गतासि, हा वनवासबन्धो, हा जनकेन्द्रनन्दिनि, हा मम प्राणवल्लभे, सीते, क्व प्रस्थितासि मामेकाकिनं विहाय। अयि परिहासशीले, कृतं परिहासेन, संनिधेहि। परितप्यते हि त्वन्मयैकजीवितो रामः।

**लक्ष्मणः**—आर्य, कदाचिदन्तरवस्थिता स्यादार्या।

**रामः**—तदन्विष्यावः। (इत्यन्तः प्रविश्यान्विष्य च।) अयि, सर्वमन्विष्टम्। हा सीते,

शून्यं तदग्निशरणं जपवेश्म शून्यं
शून्यं विहारभवनं शयनं च शून्यम् ।
शून्यं महानसमथो अजिरं च शून्यं
शून्यं त्वयाद्य दयिते जगदेव शून्यम् ॥ ९ ॥

(पुनस्तत्र तत्र धावन् ।)

पश्यामि ते सुवदने वदनं समन्ता-
त्पश्यामि ते सरसिजाक्षि कटाक्षपातान् ।
पश्यामि ते सुदति सुन्दरमन्दहासं
नो दृश्यते किमपि ते न च दृश्यसे त्वम् ॥ १० ॥

(द्वारप्रकोष्ठं प्राप्य ।)

आगच्छसीव गजगामिनि मे पुरस्तात्

(विहारस्थाने स्थित्वा ।)

संजल्पसीव कलभाषिणि कर्णयोर्मे ।

(भूयोऽप्यग्निशरणमासाद्य ।)

साध्वीव्रतानि सति मां परिपृच्छसीव
नायासि हन्त न च जल्पसि नानुयुङ्क्षे ॥ ११ ॥

(सनिर्वेदम् ।) अयि प्राणेश्वरि,

किं वा विशामि दहनं सुसमिद्धजिह्वं
किं वा पतामि शिखरान्निपतामि वाब्धौ ।
उत्कृत्य वा तनुमिमां बलिमर्पयामि
क्रव्यात्कुलस्य न हि देवि, जिजीविषामि ॥ १२ ॥

(इति मूर्छति ।)

**लक्ष्मणः**—(सव्यथम् ।) अहो महान् प्रमादः, आर्य, समाश्वसिहि समाश्वसिहि ।

**रामः**—(समाश्वस्य ।)

हित्वा सौख्यमथाभ्युपेत्य च वने क्लेशान् बहून् यत्कृते
छायेवानुगता नृपेन्द्रदुहिता मत्वा पतिं दैवतम् ।
तामात्मैकगतिं प्रहाप्य गहने प्राणेश्वरीं नश्वरान्
प्राणान्यो न जहाति वज्रहृदयः किं तेन नाश्वस्यते ॥

लक्ष्मणः—सत्वरमन्वेष्टव्या खल्वार्या । तदलं निर्वेदेन ।

रामः—गोदावरीविहारप्रिया मे प्रिया। तत्तत्रैवान्विष्यावः (इति परिक्रम्य।)

अयि सागरवल्लभे,

आवर्तनाभिरबला पुलिनाभिराम-
श्रोणी सरोजनयना नवफेनहासा ।
क्रीडासखी तव ममापि वद क्व याता
(क्षणं स्थित्वा।) कथं न ब्रूषे । अथ वा
का वा जडप्रकृतिषु प्रणयानुवृत्तिः ॥ १४ ॥

(पुनर्निरूप्य।) अथ वा तत्र विहरन्तं हंसं पृच्छामि, भोः पत-
गेन्द्र,

संदृष्टा किमु पद्मिनी त्वमिव या पद्मप्रिया मत्प्रिया
शिष्या वा तव सा विलासगमने सब्रह्मचारिण्युत ।
दिङ्मूढस्य सखे ममार्हसि दिशं वक्तुं यया सा गता
त्यागेनापि विशिष्यतेऽन्यसुकृतादार्तस्य या शर्मदा ॥

(पुनर्निरूप्य। साधिक्षेपम्।) अयि मदान्धमात,

किमु हंसतयावलिप्यसे महिमोदेति गुणे न जन्मनि ।
जलजन्तुजमेति रत्नतां न तु काचो गिरिराजसंभवः ॥ १६ ॥

लक्ष्मणः—(स्वगतम्।) कथमार्योऽप्युन्मादपरिगृहीत इव, कष्टं
भोः कष्टम् । अन्यतः क्षिपामि । (प्रकाशम्।) आर्य, अन्विष्टा नदी ।
वनान्यन्विष्यावः ।

रामः—तेन हि तथा क्रियताम् । यतः

यदि ते वचसि स्थितोऽभविष्यं न तदेमामगमिष्यमापदं द्राक् ।
परवानधुनास्मि तात तेऽहं मतितन्त्रा वशितात्र वश्यता वा ॥
(इति परिक्रम्य ।) भो भो वनस्पते,
स्कन्धेनासि शुचिस्मितामुपलताबाहां प्रवालाधरा-
माश्लिष्य स्तवकस्तनीं वनलताकान्तां नितान्तं सुखी ।
मैत्रीपात्रमतोऽसि मेऽद्य करुणापात्रं तवाहं सखे
कान्तां मे वदतो न जातु भविता विश्लेषदुःखं तव॥ १८॥
(क्षणं निरूप्य ।) अहो कारुण्यरसमेदुरतास्य । यतः
फलभरनतशीर्षो धूसराङ्गः परागैः
कुसुमपतनदम्भादश्रु मुञ्चन्नजस्रम् ।
मम गतिमनुचिन्त्य स्तम्भितात्मा महात्मा
तरुरयमतिदुःखाद्वक्तुमीष्टे न किंचित् ॥ ॥ १९ ॥
मद्दुःखदुःखितमेनं पुनर्दुःखयितुं नोत्सहे । (अन्यतः परिक्रम्य ।)
भोः कोकदम्पती,
वनिताकुचयुग्मतुल्यता यदि रात्रौ च दिवेव वां मता ।
वदतं मम वल्लभां तपो न पुनर्दम्पतियोजनात्परम् ॥ २० ॥
कथमश्रुत्वैव मद्वाक्यं, समुत्प्लुत्य गतौ। अहो दौर्जन्यमनयोः।
स्वस्य प्रभूतगुणकार्यपि यत्परस्य
स्तोकोपकारि कुधियो न तदाचरन्ति ।
मत्कार्यसिद्धिजसुखान्महतोऽप्यनन्तं
दुःखं निजं वरममन्यत चक्रयुग्मम् ॥ २१ ॥
**लक्ष्मणः**—(स्वगतम् ।) अहो अत्यारूढेयमवस्था । (प्रकाशम् ।)
आर्य, अयं हि कदलीषण्डमण्डित आर्याया विहारदेशः ।
**रामः**—प्रियतमश्च, तदेनं गच्छावः । (परिक्रम्यावलोक्य च ।)
हा विलासिनि,

इदमासितमातपे तदुग्रे शयितं पल्लवसंस्तरेऽथ यातम् ।
अनुभूतचरानिमान्विहारानिह पश्यामि न दृश्यसे वयस्ये॥२२॥

(किंचिदन्तरं परिक्रम्य ।) अयं खलु क्रीडापर्वतको देव्याः । तदेनं संभावयामि (आरुह्य सानुस्मरणम् ।) वत्स लक्ष्मण,

इह खलु तिलके मया प्रणष्टे भृशकुपिता दयिता मनःशिलायाः ।
पुनरपि विनिवेश्य गण्डपार्श्वे नवतिलकं परिसान्त्विता कथंचित्॥

(पुनः परिक्रम्य ।) इदं खलु लताभवनं भामिन्याः । (प्रविश्य निध्याय च ।)

पुष्पैर्यथार्हविनिवेशविशेषशोभैः
संशोभिते सुरुचिरे वपुषि प्रियायाः ।
एतत्परं न शुशुभे भुवनं च कृत्स्नं
निर्वाणभूरजनि चाक्षुषवैभवस्य ॥ २४ ॥

तदिदमिदानीं मम जीवितनिर्वाणपदं संवृत्तम् । (इति मूर्छितः पतति ।)

**लक्ष्मणः**—(उत्थाप्य विलोक्य च) हा कथं निर्वाणमिवार्यस्य चरितम् । यदेष न निःश्वसितीव । हा किं करोमि मन्दभाग्यः ।

(प्रवालमयेन व्यजनेन वीजयन् ।) हा रघुनाथ,

परिचरन्नभविष्यमहं न चेन्न तव क्रमशूमुपैष्यदिदं विभो ।
व्यसनमेतदथापरमप्यहो गुणनिधे मदभाग्यकृतं नु ते ॥२५॥

(इत्युच्चैराक्रन्दति) ।

**रामः**—(आश्वस्योत्थाय साक्षेपम् ।) अयि, कथमन्यथा स्थितमन्यथोपपादयसि । पश्य ।

नो मन्थरा न खलु केकयभूर्न विग्रा
नो वा मृगो न च विदेहसुतादुरुक्तिः ।
न त्वं न वा निशिचरो व्यसनोदयेऽस्मिन्
रामस्य रामकृतदुष्कृतमेव हेतुः ॥ २६ ॥

तदलं वृथात्मनः क्लेशनेन । वत्स, इतः परमिह स्थातुं नालम् । यदत्र बहूनि विनोदस्थानानि प्रत्यक्षीक्रियमाणानि समुद्दीपयन्ति शोकाग्निम् । तदन्यतो गच्छावः (परिक्रम्य ।) एष खलु प्रस्रवणो नाम सानुमान् । एनं पृच्छामि । भोः,

**क्व नु भूधर भूसुता गताऽभूद्वद मे तां ललनासु रत्नभूताम् ।**
**जगतीमनयैव रत्नगर्भां कलयेर्यद्वहनान्महीयसे त्वम् ॥ १७ ॥**

(क्षणं स्थित्वा ।) अहो दौरात्म्यमस्य शिलोच्चयस्य ।

**कुतो न मामभ्युपपद्यतेऽद्रिर्न चैष दुःखी न कृपार्द्रचेताः ।**
**दण्ड्यो ह्यसावुद्धतकर्कशात्मा मयि स्थितोऽसद्विनयाधिकारः ॥**

तद्वत्स, धनुर्धनुः ।

**लक्ष्मणः**—आर्य, गच्छावोऽन्यत्र । किमस्य नि[illegible]णेन ।

**रामः**—(सनिर्वेदम् ।) वत्स, [illegible]न गन्तव्यम् । कश्च वा मयेदानीमीक्षितुं शक्यः ।

**सीतासखे मयि पुरा प्रणमत्युदात्त-**
**संभावनामकृत यः स विदेहराजः ।**
**ईक्ष्यो नु किं किमु जनोऽप्यपरो जगत्यां**
**वैवस्वतः परमसावधुना मयेक्ष्यः ॥ १९ ॥**

तत्सज्जीक्रियतां ममाग्निप्रवेशसंभारः । अथ वा मास्तु । त्वयाभिगम्यतां स्वदेशः । अहं पुनरस्य दारपराभवस्य यदनुरूपं तत्स्वयमेव कर्तास्मि । हा पतिदेवते, हा अरुन्धत्याप्यभिनन्दितशीले, हा अनसूययाप्युपलालनीयगुणविशेषे, हा लोपामुद्रयाप्यसकृदुपवर्णितचारित्रे, हा कल्याणाभिजने, अयि कल्याणाचारे, प्रिये कल्याणि, क्व गतासि, कथं मां विहाय गतासि । देवि, अहो बत परितप्यते हि शून्येऽरण्ये तव कण्ठाश्लेषप्रणयी जनः । किं न पश्यासि ।

जाता त्वं देवयजनाज्जातोऽहं देवताचरोः ।
वने मर्तव्यमावाभ्यां धिग्धिग्जन्मकदर्थनाम् ॥ ३० ॥

(विमृश्य । सविजुगुप्सम् ।) अयि जनकनन्दिनि, यत्प्रत्ययेन निर्भय-मटवीं प्रविष्टासि, जीवन्नेव स त्वां नाशयित्वा मृतकोपमः संवृत्तः । कलत्ररक्षणेऽप्यक्षमस्य किमनेन भारभूतेन शरासेन भूभारभूतेन शरीरेण वा । लक्ष्मण लक्ष्मण, समिध्यतां पावकः ।

**लक्ष्मणः**—(ससंभ्रमम् ।) आर्य, पश्य पश्य । एते हि मृगा आर्यागतिं सूचयन्तीव ।

अवाचीं धावन्तः पुनरभिपतन्तश्च सविधं
मुहूर्तं स्थित्वाग्रे किमपि कथयिष्यन्त इव नौ ।
पुनः पश्यन्तस्तां दिशमनुसरन्तश्च सरणिं
पुरस्तादार्यायाः स्थितिमुपदिशन्तीव हरिणाः ॥ ३१ ॥

**रामः**—(ससंभ्रममुत्थाय ।) भो मृगाः, यद्येवं कथयत देव्याः पन्थानम् । (मृगदर्शितेन वर्त्मना दक्षिणां दिशं प्रति परिक्रामन् ।) वत्स, पश्य पश्य । एते खलु मृगाः

दीने दीनमुखाः कृशे कृशतराः साश्रौ सबाष्पा भृशं
व्याख्यान्तः समवस्थतां मृगयितुं मय्युत्थितेऽनूत्थिताः ।
बन्धुर्नाम स एक एव भुवने दुःखेषु यो भागभाक्
यः कोऽप्यस्तु महाशयोऽयमितरे बन्धुच्छलास्तस्कराः॥३२॥

(परिक्रम्यावलोक्य च ।) पश्य वत्स, सांग्रामिकान्युपकरणानि। ततश्च

उभाभ्यां रक्षोभ्यां ध्रुवमपहृता मे प्रणयिनी
विवादोऽभूदेनां प्रति बत मृधान्तः पथि तयोः ।
प्रवृत्तं तद्युद्धं तुमुलमिह तस्मिन्विजयिना
हृता वा जग्धा वा व्यतिकरविपन्नासुरथवा ॥ ३३ ॥

**लक्ष्मणः**—आर्य नैतदेवम् ।

**रामः**—तर्हि कथमत्र समरः ।

**लक्ष्मणः**—

शस्त्राण्यत्र निपातितानि न पुनश्छिन्नानि तान्यायुधै-
ध्वंस्तः सारथिरेक एव सखरश्चञ्च्वा कुशीतिग्मया ।
मन्ये तेन पथि प्रसह्य हरणं दृष्ट्वा स्नुषायाः क्रुधा
रुद्ध्वा शत्रुमिहाततान समरं तातः शकुन्तेश्वरः ॥ १४ ॥

**रामः**—यद्येवं, अवश्यमन्वेष्टव्यस्तातः । (परिक्रम्यावलोक्य च) लक्ष्मण लक्ष्मण,

सीतां जक्षन् सुखं सुप्तो हन्यतामेष राक्षसः ।

(नेपथ्ये ।)

सीतां रक्षन् हतः संख्ये मुमूर्षुस्ते पितुः सखा ॥ १५ ॥

**रामः**—(सत्वरमुपसृत्य ।) कथं तातजटायुः । आस्तात, किमियं ते दशा, (सरभसम् । ) तात, कथय शेषम् । केन हृता सीता ।

**जटायुः**—रक्षसा

**रामः**—कथय कथय शेषम् ।

**लक्ष्मणः**—(परीक्ष्य ।) आर्य, शान्तासुस्तातः ।

**रामः**—आः किमिदम् ।

मदर्थे वितथारम्भौ मय्यनावेदिताशयौ ।
तातस्तातजटायुश्च गतौ मच्चिन्तया दिवम् ॥ १६ ॥

वत्स, यथा मन्निमित्तमस्य निधनं मां पीडयति, न तथा सीतापहारोऽपि (प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा ।) अयि केकयराजनन्दिनि,

संतप्यते दिवि पिता भुवि चैव माता
संतप्यते प्रकृतिभिः सह मेऽनुजन्मा ।

नष्टा प्रिया पितृसमः खगराट् च नष्ट
एकोऽपि ते बहुफलो जनानि प्रयोगः ॥ ३७ ॥

लक्ष्मणः—आर्य, किमनेनाद्य । प्रकृतमनुरुध्यताम् ।

रामः—(जटायुषं स्पृशन् ।)

त्वं जात्या विहगोऽण्डजो वयममी पृथ्वीचरा मानवाः
सख्यं चाभिनवं हि नौ न च मया किंचित्प्रियं ते कृतम्।
तादृक्कं दशयानया निरुपधिं स्नेहं मयि व्यावृणोः
कीदृग्भिस्तव तस्य तात सुकृतैरानृण्यमीयां वद ॥ ३८ ॥

वत्स, एवमुपकारिणमेनं जटायुषं पितृमेधेन विधिना संस्कर्तुमाशंसे।

लक्ष्मणः—अनुरूपमेवेदम् । (इति निष्क्रम्य पुनः प्रविश्य ।) आर्य, सज्जीकृतानि संस्कारोपकरणानि ।

रामः—तेन हि संस्करोमि । (इति निष्क्रम्य । पुनरागत्य च ।) वत्स, इदानीं निर्यातितर्णोऽस्मि तातजटायुषः ।

लक्ष्मणः—तथैव । ननु परितप्यते खल्वार्या रक्षोहस्तगता । तदविलम्बेनान्विष्यावो देवीं दक्षिणस्यां दिशि ।

रामः—(ससंभ्रममुत्थाय ।) तेन हि प्रस्थितोऽस्मि (परिक्रामन्नेव।) वत्स, ननु लघूकृतोऽस्मि दारानपहरता रक्षसा । न शक्नोति खलु मे हृदयं तमिमं पराभवं सोढुम् । प्रतिज्ञातं च मया दण्डकारण्यवासिनां मुनीनां रक्षोभ्यो रक्षणम् । अतः

कुशिकतनयोपज्ञैश्चेतःशरव्यनिपातिभि-
र्जलधिरशनां कुर्वन्नीराक्षसां निशितैः शरैः ।
मुनिजनतपश्चर्याविघ्नं कलत्रपराभवं
त्रिदशयुवतिक्लेशं चाशु प्रमार्जितुमुत्सहे ॥ ३९ ॥

लक्ष्मणः—आर्य, लोकस्य प्रमाणभूतः खलु भवान् ।

**रामः**—कः संदेहोऽत्र ।

**लक्ष्मणः**—तथा सति न सांप्रतमेव कस्मिंश्चिद्द्ह्याति, सर्वत्र श्रौघोत्सर्गः । अन्यथा कृत्स्नमाकुलितं भवेत् । यतः

**यदि जातिरेव दुष्यत्यप्येकस्यां कृतागसि व्यक्तौ ।**
**न तदस्ति जगति भूतं सुरनरतिर्यक्षु नापराद्धं यत् ॥ ४० ॥**

परं च । यदि तत्र कोऽपि साधुर्भवति, तस्य का गतिः

**रामः**—कथं राक्षसजातावपि साधुः, न ह्याशीविषेषु निर्विषोऽस्ति।

**लक्ष्मणः**—तर्हि कथमिदं संगच्छते ।

**प्रह्लादो भुवनैकमङ्गलगुणो जातो महादानवा-**
**द्धर्मव्याधगुहौ सुपूजितगुणौ जातौ निषादान्वये।**
**वेनाद्या विगुणा महाकुलभवा जात्या किमेषां कृतं**
**तन्मे नानुमतं वृथान्यकदनं शेषे प्रमाणं भवान् ॥४१॥**

**रामः**—युक्तमुत्पश्यसि ।

(नेपथ्ये ।)

अब्रह्मण्यमब्रह्मण्यम् ।

**रामः**—(ससंभ्रमम् ।) वत्स, ज्ञायतां केनेदमब्रह्मण्यमुद्घोषितम् ।

**लक्ष्मणः**— तथा (इति शरचापहस्तो निष्क्रान्तः ।)

(पुनर्नेपथ्ये ।)

**नियुक्तानेतुं त्वां कुतुकितधिया तेऽहर्णविधौ**
**शबर्या लच्छिष्या रघुवर कुमारश्रमणया ।**
**समापत्त्यासन्ने वनभुवि कबन्धाकृतिजुषः**
**प्रविष्टाहं मृत्योर्निरयसदृशे वक्त्रकुहरे ॥ ४२ ॥**

**रामः**—(सव्यथम् ।) कथं रामसंबन्धि यत्किंचिदपि विपद्यते । (पुनः सरभसम् । नेपथ्याभिमुखमवलोक्य ।) अयि वत्स, (इत्यर्धोक्ते सहर्षम् ।) कथं मन्नियोगात्प्रागेव वत्सेन च्छिन्नबाहुर्योजनबाहुः । (पुनर्निरूप्य ।

सविस्मयम् ।) कथं कबन्धस्य शरीरात्कोऽपि दिव्यः पुरुषः समुत्थाय ततो निर्मुक्तया तापस्या वत्सेन च साकं सोल्लासं संलपन्नित एवागच्छति । दिष्ट्या प्रहरन्नपि कबन्धस्य परमोपकारी संवृत्तो मे वत्सः ।

( ततः प्रविशति दिव्यपुरुषेण तापस्या चानुगम्यमानो लक्ष्मणः ।)

**लक्ष्मणः**—आर्य,एष दनुकबन्धस्य शरीरादुत्थितो दिव्यः पुरुषः।

**रामः**—भो दिव्यपुरुष, इच्छामि भवत एतद्गतिप्राप्तिकारणं ज्ञातुम् ।

**दिव्यपुरुषः**—(सप्रणाममञ्जलिं बद्ध्वा।) अहं किल दनुर्नामाप्सरसः श्रियः पुत्रः स्थूलशिरसं नाम मुनिमवमत्य तेन राक्षसत्वं गमितोऽस्मि।

**रामः**—अथ काबन्ध्ये को हेतुः ।

**दिव्यपुरुषः**—ब्रह्मणोऽवध्यत्ववरं प्राप्य शक्रेण सह युद्धमाचरन् वज्रेण मूर्ध्नि प्रहृतवता तेन कृतकाबन्ध्योऽस्मि ।

**रामः**—ततस्ततः ।

**दिव्यपुरुषः**—ततः प्रसादितेन तेन भवत्समागमान्तत्वं शापस्य विहितम् । एष मे वृत्तान्तः । एवमुपकृतवतोर्युवयोः किमहं प्रत्युपकरिष्यामि । तथापि श्रूयताम् । भो दाशरथी, एष दृश्यते हि ऋश्यमूको नाम गिरिः । तत्रास्ते सुग्रीवो नाम वानरराजः । तत्सख्येन सुखं कार्यं साधयिष्यथः ।

**रामः**—(सहर्षम् ।) भो दिव्यपुरुष, एवं मार्गोपदेशेन सम्यगुपकृतमस्माकम्। समाश्वासय चिरपर्युत्सुकं ते दयिताजनम् । वयमपि त्वदुक्तेन विधिना यतिष्यामहे ।

**दिव्यपुरुषः**—एष साधयामि । (इति निष्क्रान्तः ।)

**रामः**—अथ तापस्याः किमागमनप्रयोजनम् ।

**तापसी**—आर्य, ऋश्यमूकगिरेर्वर्त्मनि कृताश्रमा श्रमणा भवद्भ्यर्चनाय सज्जातिथेया तिष्ठति ।

**रामः**—वत्स, नालं महानुभावां तामतिलङ्घितुम् । तत्प्रथमं तत्रैव गच्छावः (इति परिक्रामति ।)

**तापसी**—आर्यौ, अयमेव शबर्याश्रमः । सज्जैव तिष्ठति श्रमणा । तत्प्रवेष्टुमर्हथः ।

(रामलक्ष्मणौ तथा कुरुतः ।)

(ततः प्रविशति पूजोपकरणेन शबरी ।)

**शबरी**—(दृष्ट्वा, सहर्षम् ।) दिष्ट्या चिरस्य कृतार्थास्मि ।

**तपस्तप्तं चीर्णं व्रतमुपचिता भूतकरुणा**
**समाधिः संपन्नो वरिवसितपादाश्च गुरवः ।**
**जिता दिव्या लोका जितमपि च जन्मेदमधुना**
**यतोऽहल्यातीर्थं जयति मम कुट्यां पदरजः ॥ ४३ ॥**

(ससंभ्रममुपसृत्य ।) एषाहमभिवादये । अपि स्वागतमत्रभवतोर्दाशरथ्योः । इमे आसने, इदं पाद्यं, इदमर्घ्यं, इमानि फलानि (इति पूजयति ।)

**रामः**—अयि तापसि, अपि नाम समृद्धाः सिद्धयः ।

**शबरी**—कथमिदानीमप्यसमृद्धता सिद्धीनाम् । यतः

**भो राम लक्ष्मण युवां पुरुषौ पुराणौ**
**जातौ हि नश्चिरकृतैः सुकृतैर्जगत्याम् ।**
**प्रीतौ युवां यदि तपश्चरणैः किमुग्रै-**
**र्नो चेद्वृथा श्रमकरैः करणस्य किं तैः ॥ ४४ ॥**

तस्मादनेन युष्मत्प्रसादेनैव सिद्धशबरी संवृत्तास्मि ।

**रामः**—(सश्लाघम् ।) अहो उदारो व्याहारः श्रमणायाः ।

( प्रविश्य ।)

**तापसी**—स्वामिनि, वानरराजः सुग्रीवः सामात्यो द्वारि तिष्ठति।

**शबरी**—तापसि, शीघ्रं प्रवेशय प्रियसुहृदं सुग्रीवम्।

**तापसी**—तथा ( इति निष्क्रान्ता ।)

**रामः**—( सकौतुकम् ।) कथं वानरराजः सुग्रीवः । अस्माभिरन्विष्यमाण ओषधिविशेषः स्वयमेव हस्ते पतित इति महदिदं कौतुकस्थानम् । तदहमेव गत्वा तं संभावयितुमाशंसे ।

**शबरी**—देव, संभावयिष्यस्यातिथ्यानन्तरम् । तदनुगृह्यतामयं जनः ।

**रामः**—अप्रत्याख्येयं श्रमणावचनम् ।

(ततः प्रविशत्यमात्येन हनूमतानुगम्यमानः सुग्रीवः ।)

**सुग्रीवः**—भो हनूमन्, अपि नाम शबर्याः संदेशः सत्यो भवेत् । यथा किल—'भोः सुग्रीव, रामलक्ष्मणौ नाम राजपुत्राविह कार्यवशादागच्छतः। तदुपस्थानेन वीतशोकः श्रेयो गमिष्यसि। तच्छीघ्रमायाहि' इति ।

**हनूमान्**—ननु भोः, कथं सिद्धाया वचस्यपि वितथार्थत्वम् । अतो मन्ये सिद्धशबरीरूपेण सिद्धिस्त्वामामन्त्रयते ।

( पुरोऽवलोक्य ।)

**सूर्याचन्द्रमसौ समं किमुदितौ वीरप्रसादौ नु किं**
**धर्मार्थौ किमु रूपिणौ समुदितावुत्साहमन्त्रौ नु किम् ।**
**तावेतौ हि परंतपौ रघुकुलोत्तंसौ शरण्यौ सता-**
**मासेवस्व नरर्षभौ कपिवर त्वां सिद्धिरासेवताम् ॥४९॥**

**सुग्रीवः**— तथा ( इति परिक्रामति ।)

**शबरी**—भो राम, अश्रौषं शरणार्थिभ्यस्तपस्विभ्योऽभयं प्रदाय, अनुक्षणमेव तथा निर्व्यूढं खरादीन्निगृह्णता भवतेति ।

**लक्ष्मणः**—श्रमणे, शरणार्थिनामविशेषेण सर्वेषां शरणदानाय कृतपरिकरो ह्यार्यः ।

**शबरी** (सबहुमानम् ।) सदृशमेवेदं विकर्तनकुलतिलकस्य ।

**सुग्रीवः**—(आकर्ण्य सहर्षं ससंभ्रमं च ।) भो राम, एषोऽस्मि त्वां शरणं प्रपन्नः सुग्रीवो नाम वैकर्तनो वानरः ।

**रामः**—(सरभसमुत्थाय ।) कथं कपिराजः सुग्रीवः। मम त्वं सखासि (इति दोर्भ्यां परिष्वजते ।)

**शबरी**—तापसि, इच्छाम्यहमेतद्रामसुग्रीवयोः सख्यमग्निसाक्षिकं विधाय द्रढयितुम् ।

**तापसी**—नन्वद्यापि समिध्यत एव चिराय स्वर्गतानामप्यस्मद्गुरूणां तपःप्रभावेण त्रेताग्निरग्निशरणे ।

**शबरी**—तेन हि तत्संनिधौ प्रवर्ततां युवयोर्मैत्री ।

**रामसुग्रीवौ**—(तथा कृत्वा ।) भो वैकर्तन,

सुखमसुखमपीह यत्तव स्यान्मम च तदेव वयस्य किं बहूक्त्या।
कलयतु दधती द्विरूपतां नौ नरहरिता नृहरेरिवैकभावम्॥४६॥

**शबरी**—भो भो नरवानरेन्द्रौ, दिष्ट्या सुसंघटितमैत्रीकौ स्थः । अनेनैव विधिना मिथः कृतोपकारौ कृतिनौ च भूयास्तम् । अहं तु चिरविश्लिष्टां दिवमारूढानां गुरूणां शुश्रूषां पुनरनुसंधातुमाशंसे ।

**रामः**—अहं मन्ये एवं मैत्रीकरणेनावां कृतकृत्यौ विधातुमेवात्रभवत्या गुरुविश्लेषोऽपि दुःसहः सोढ इति ।

**शबरी**—आत्मानमेव कृतार्थयितुं प्रथमं प्रवृत्तास्मि ।

**रामः**—इदमानुषङ्गिकं कार्यं भवत्याः ।

**शबरी**—दाशरथे, बाढम् , तथैव ।

**सुग्रीवः**—(उत्थाय ।) सखे राम, मास्तु तपस्विन्या गतिव्याघातः । वयमपि ऋश्यमूकमेव गच्छामः ।

**रामलक्ष्मणौ**—तेन हि तथा कुर्मः। (इत्युत्तिष्ठतः।)

**हनूमान्**—ननु राघवौ, पवित्रीक्रियतां ममायमंसप्रदेशः कुमाराभ्याम् (इति स्वं स्कन्धमवनमयति।)

**रामः**—ननु शक्तावेव पादाभ्यां चङ्क्रमितुमावाम्।

(हनूमान् सुग्रीवस्य मुखमीक्षते)

**सुग्रीवः**—सखे राम,

प्राज्ञो विक्रमवान् प्रसन्नकरणग्रामः प्रगल्भाग्रणीः
साचिव्ये तुमुले रणे च महतीं वोढुं समर्थो धुरम्।
बिभ्रत्स्वामिनि सौहृदं दृढतरं पुण्यस्य दास्याय ते
संप्राप्तो ह्यनुगृह्यतामभिमतापूर्त्या हनूमानयम्॥ ४७॥

**रामः**—(सकौतुकम्।) वत्स, अयं प्रथमो लाभः कपिराजसख्यस्य। (इति लक्ष्मणेन सह हनूमतः स्कन्धमारुह्य।) श्रमणे, एते वयं साधयामः।

(इति निष्क्रान्ताः।)

(निष्क्रान्ताः सर्वे।)

इति श्रीलक्ष्मणसूरिप्रणीते पौलस्त्यवधनाटके तृतीयोऽङ्कः॥

# चतुर्थोऽङ्कः ।

---

(ततः प्रविशत्यविन्ध्यो नाम राक्षसः ।)

**अविन्ध्यः**—(सनिर्वेदम् ।) यदा सीतां नाम नारीमाहृतवानस्माकं राजा रावणः, तदा प्रभृति महोत्पातैराकुलीभवत्येषा लङ्कापुरी तथा हि—

**प्रजायन्ते व्याघ्राः सुतनुषु तथा गोषु च खरा**
**रसाले किम्पाकाः सरसिरुहकोशे विषधराः ।**
**रुवन्त्युच्चैर्नित्यं श्रुतिकटु सृगालाः प्रतिगृहं**
**सृजन्त्युग्रामभ्राण्यशनिमथ वर्षन्ति रुधिरम् ॥ १**

एवमादीनि दुर्निमित्तान्युत्प्रेक्ष्य शङ्कितेन मया तत्तदुत्पातवर्णनपूर्वकं रहसि रावणे निवेदितम्—"महाराज, अग्रे महाभयशंसीनि बहून्येतानि दुर्निमित्तानि अर्वागेव संवत्सरादस्मन्नगरे भूरिशः संदृश्यन्ते । अतीताश्च दश मासा भवता जनस्थानादाहृत्याशोकवनिकायां निहितायाः सीतायाः। तन्निश्चीयते सीतानिमित्तं भयमस्माकमासन्नमिति । न चैयता कालेन विविधैरुपायैरपि सा वशयितुं शक्या बभूव । परं च । लोकस्य प्रमाणं हि राजा नाम । तस्मिन्न्यायवर्तिन्येव ततो भयात्प्रजाश्च न्याय्ये पथि कथंचित्प्रवर्तेरन् । निदर्शयन्ति च तदेवम् । यथा—

**उच्चैः सत्पथमास्थिते दिनकरे राजन्ति सर्वा दिश-**
**स्तस्मिन् भ्रश्यति मार्गतस्तु तमसा नो भान्ति ता दूषिताः।**
**राज्ञश्चैष विधिः स चेत्स्थिररतिर्धर्मे भजन्ते प्रजा**
**धर्म्यं वर्त्म विपर्यये तु सहसा धावन्त्यधोऽधोऽम्बुवत् ॥२॥**

तेषां च प्रधानभूतस्य भवतो न युज्यते लोकशास्त्रविगर्हितं परदाराभिमर्शनम् । सन्ति च त्वयि स्त्रीसर्गस्य ललामभूतास्त्वयि सकामाश्च बह्वयो ललनाः । तदेनामन्यपूर्वामन्यकामामस्माकमनर्थहेतुभूतां च सीतां परित्यज्य, भवदेकजीवितं कृत्स्नं रक्षःकुलं परित्रातुमर्हसि" इति । एवं मुहुर्मुहुरनुनाथ्यमानोऽपि स राक्षसनाथः 'अपृष्टोत्तरमिदं' इत्यभिधायान्तःपुरं प्रविष्टः । अहो कालस्य वैपरीत्यम् । एवं गते किं मया कार्यम् । (विमृश्य ।) युवराजविभीषणे कर्तव्यं निवेदयामि । (परिक्रम्यावलोक्य च ।) कथमस्मत्पुराधिदेवता लङ्का विषण्णा प्रस्थानाभिमुखीव च लक्ष्यते । तदेनां पृच्छामि । ( परिक्रामति ।)

(ततः प्रविशति पुराधिदेवता लङ्का ।)

लङ्का:—अहो अद्भुतमद्भुतम् । अधुना खलु

तीर्त्वा राशिमपामतीत्य सुरसां छायाकृपं चार्दयन्
जित्वा मां च पुरं विवेश हनुमानन्वेषको जानकीम् ।
ओजस्वित्वमिदं कपेर्न सहजं नो राघवीयं महो
धर्मस्यैव महत्तरस्य महिमा वज्रायते यत्तृणम् ॥ ३ ॥

अहो पातिव्रत्यं जानक्याः— यदियं हठाद्द्वीपान्तरमानीय सुगुप्ते प्रदेशे निहितापि बीभत्सदर्शनाभिराशरीभिः संतर्ज्यमानापि प्रत्यहमद्भुताद्भुतैरुपभोगविशेषैः प्रलोभ्यमानाप्यात्मनो व्रतमभङ्गुरं धारयति । अस्या एव महिमाविशेषोऽयं, यन्मर्कटकीटोऽप्येवमोजायते स्म । एतदाहरणं तूलकया शिरःकण्डूयनमिव राक्षसराजस्य । (सनिर्वेदम्) ततः किमस्य नगरपालनवृत्त्या । एतमर्थं विभीषणे निवेद्य ब्रह्मलोकं जिगमिषुरस्मि। ( पुरोऽवलोक्य । ) कथममात्योऽविन्ध्य इत एवागच्छति। तदस्मिन्नेव निवेद्य प्रयामि (परिक्रामति ।)

अविन्ध्यः—(उपसृत्य ।) देवि लङ्के, भवतीं कुत्रापि प्रस्थानोन्मुखीमिव लक्षयामि ।

**लङ्का**—अमात्य, सम्यगुपलक्षितं त्वया । अहमिदानीमपि दुःखमुज्झित्वा ब्रह्मलोकं गन्तास्मि ।

**अविन्ध्यः**—(सत्रासम् ।) देवि, कस्य वा हेतोः ।

**लङ्का**—(सविषादम् ।) अमात्य, परिभूतास्मि वानरेण ।

**अविन्ध्यः**—देवि, किं वालिना ।

**लङ्का**—नहि नहि । निहतो हि सः ।

**अविन्ध्यः**—(सरभसम् ।) कथं वाली निहतः । तेन हि देवि, इच्छामि त्रैलोक्यैकमल्ले तस्मिन्नप्यकुण्ठितवीर्यप्रसरं तं महावीरं श्रोतुम् ।

**लङ्का**—अमात्य, यैषा महाराजरावणेनाहृता सीता नाम, तत्पतिना मृगयालीलयैव मारितोऽसौ वनमृगः ।

**अविन्ध्यः**—देवि, किं रामेण निहतो वाली । यद्येवं, कृत्स्नमिदं राक्षसबलमेकस्य रामबाणस्य न पर्याप्तम् ।

**लङ्का**—अमात्य, तथैव ।

**अविन्ध्यः**—(सभयकम्पम् ।) देवि, केन वा प्रसङ्गेन वाली रामबाणस्य गोचरो बभूव ।

**लङ्का**—अमात्य, श्रूयताम् । जनस्थानादपहृतां सीतामन्विष्य चरन्तौ रामलक्ष्मणौ सुग्रीवः शरणं प्रपन्नः ।

**अविन्ध्यः**—देवि, ततस्ततः ।

**लङ्का**—ततः स प्रपन्नरक्षाव्रती रामः सुग्रीवमाश्वास्य, भ्रातृद्रोहपातकं वालिनो वधकारणं कृत्वा, तमेकेन बाणेन निहत्य, सुग्रीवं कपिराज्ये निहितवान् ।

**अविन्ध्यः**—अहो उदात्तमस्य चरितम् । देवि, केन तर्हि वानरेण त्वमभिभूतासि ।

**लङ्का**—कृतज्ञेन तेन सुग्रीवेण सीतान्वेषणाय प्रहितेषु वानरेष्वे-

कतमो हनूमान्नाम एकोत्पातेन सागरमुल्लङ्घ्य मां च बलादभिभूय रावणान्तःपुरं प्रविष्टः।

**अविन्ध्यः**—(साभ्यर्थनम्।) एतदर्थं नास्मानुज्झितुमर्हति भवती।

**लङ्का**—अमात्य, तथा खलु मे भगवतः परमेष्ठिनः सन्देशः, 'यदा त्वां बलाद्वानरोऽभिभवेत्तदा त्वया तत्पुरमुज्झित्वा, इहागन्तव्यं' इति। तदलं निर्बन्धेन।

**अविन्ध्यः**—देवि, यद्यवश्यं गन्तव्यमेव, तदा युवराजविभीषणं दृष्ट्वा गन्तुमर्हसि।

**लङ्का**—अस्तु तथा (इति निष्क्रान्ता।)

**अविन्ध्यः**—अहमपि तस्य वानरस्य चेष्टितं निरूपयामि। (इति प्रासादमारुह्यावलोक्य च) कथं कोऽपि वानरो बिडालमात्राकृतिरशोकवनिकां प्रविशति। किमसावेव स हनूमान् (पुनर्निरूप्य।) नूनमयमेव सः, यदस्मिन् वानरजातिसुलभं चापलं नोपलक्ष्यते, गुरुतरं कार्ये वैयग्र्यमुपलभ्यते। कथं सीतादेव्या आवासभूतं शिंशुपावृक्षमेवारोहति। अहो महाननर्थ आपतितः। तदहं राजकुलं गत्वा, तत्रैव यथोचितं चिन्तयामि। (इति निष्क्रान्तः) (शुद्धविष्कम्भः)

(ततः प्रविशति शिंशुपावृक्षशाखामधितिष्ठन् हनूमान्।)

**हनूमान्**—(सौत्सुक्यम्।)

**क्षिप्तं यन्महिषास्थि कूटसदृशं यत्सप्तसाल्या समं**
**वाली चैकशराहतो न खलु तद्वीराग्रगण्येऽद्भुतम्।**
**एतद्विस्मयमातनोति सुचिरान्निर्दग्धपक्षस्य य-**
**त्तज्जायापदवर्णनादभवतां गृध्रस्य पक्षौ नवौ॥ ४॥**

अपि च।

**मैनाको यदुपास्त मां क्षितिधरो मध्येऽब्धि विश्रान्तये**
**यच्चैतच्छदयोरभीतिमददात्पक्षच्छिदुर्वीभृताम्।**

व्यक्तं तेन यथा मनाग्रघुपतेर्दासं भजन् सेव्यते
निर्वैरं त्रिदशेश्वरैश्च किमु तं साक्षादजस्रं भजन् ॥ ५ ॥

अत एव मया रामदर्शनसमकालमेव तद्दास्याय ममायमात्मा समर्पितः। (विमृश्य।) अस्माकं राजा सुग्रीवोऽपि महाभाग एव, यदयं मनसाप्यप्रतीक्षितं तस्य विभोर्मैत्रीलाभमासाद्य, तत्प्रसादोपसादितं सुदुर्लभं वानराच्छभल्लगोलाङ्गूलादीनां वनौकसामखण्डं राज्यमनुभवति। ततश्च सीतामार्गणे कृतव्यवसायस्य तस्य कपीश्वरस्य शासनेनास्माभिरन्यैश्च कपिवीरैरन्विष्यत एव कृत्स्ना चेयं पृथिवी। (पुनर्विमृश्य। सहर्षबहुमानम्।) अहो आश्रितवात्सल्यं रघुवीरस्य। यतस्तेन

समुत्तार्यं मित्रं व्यसनजलधेस्तत्तु विदधे
प्रपन्नं सुग्रीवं सपदि कपिराज्ये कलयता।
स्वदारानन्वेष्टुं स्वयमधिबलेनापि सुहृदो
यशस्कामेनैव प्लवगपतिरुद्यन्ननुमतः ॥ ६ ॥

ततश्च संपातिना निवेदितेऽस्मिन् लङ्कानगरे देव्या अवस्थाने, तदर्थं सागरलङ्घनाय प्रवृत्तेष्वपि तस्यापारपारतामन्वीक्ष्य भग्नोत्साहेषु वानरानीकेषु, ऋक्षराजेन जाम्बवता प्रोत्साहितस्य मे गोष्पदप्रायतामापद्यत स एव पारावार इत्येतदपि धर्मात्मनस्तस्य प्रभोर्माहात्म्यमेव। सोऽहमिदानीं सर्वं लङ्कापुरं रावणान्तःपुरं च पुनः पुनरन्विष्यालब्धमनोरथोऽपि यावद्देव्या दर्शनं तावदिमामेव नगरीं भूयो विचिनोमीति कृताध्यवसायः सन्ननन्विष्टपूर्वामिमामशोकवनिकामन्वेष्टुमभिप्लुतोऽस्मि। तदस्मिन् समुत्तुङ्गे शिंशपावृक्षशाखाग्रे तिष्ठन्नवलोकयामि (तथा कृत्वा।) कथमस्यैव वृक्षस्याधस्ताद्बहुचो निशाचर्यः संघीभूता इव दृश्यन्ते। कदाचिदत्रैव वर्तेत सा देवी। तन्निरूपयामि। (निरूप्य।) कथमासां बीभत्सदर्शनानां मध्ये मूर्तिमती सौभाग्यदेवतेव शोभमाना

काचिदङ्गना दृश्यते। का न्वियं स्यात्। न खल्विमां प्राकृतयोषितं मन्ये। तदेषा

रूपाणामधिदेवता किमु तपःसिद्धिर्नु वा रूपिणी
सौशील्यस्य किमीश्वरी किमु सतीचारित्रविद्यागुरुः।
ह्रीश्रीकीर्तिधृतिक्षमामतिगिरां मूर्तिः समष्ट्या नु किं
किं वा काचन शक्तिरस्य जगतो रक्षार्थमभ्युत्थिता ॥७॥

(पुनर्निरूप्य। सवितर्कम्।) कथमीदृशीयमपि शोकसागरे निमग्नेव दृश्यते। किमियमेव सा देवी, यां सीतेति व्यपदिश्य दिवारात्रं परितप्यते स रघुनाथः। (पुनः समन्ताद्दृष्टिं व्यापार्य। सकौतुकम्।) नूनमियमेव सा रामभार्या। यतस्तदीयान्याभरणानि, पूर्वमृश्यमूके कौशेयखण्डे संबध्य प्रक्षिप्तेभ्यः शेषाण्यत्रैव शाखायामवलम्बितानि दृश्यन्ते। तेषु च

युग्मे तत्र यदेकमस्ति सदृशं तस्यान्यदत्रेक्ष्यते
यत्तत्रोभयमप्युपेतमिह तन्नो लक्ष्यते भूषणम्।
कौशेयं च तदेव हीदमपि तु क्लिष्टं चिरं धारणा-
त्तद्रूपं स गुणस्तदेव च वयो रामेण यत्कीर्तितम् ॥ ८ ॥

तस्मान्नूनमियमेव सा सीता (सपुलकोद्भेदम्।) अहो अद्भुतम्।

धन्या वानरजातिरद्य सुतरां धन्या जनन्यञ्जना
धन्यौ केसरिमारुतौ मम गुरू धन्योऽस्मि धन्योऽस्म्यहम्।
यत्किंचिन्मम चेष्टितं सुरनदीपातीव कुल्याम्बु य-
त्सीतारामकथान्तरेऽनुपतितं तीर्थप्रथामश्नुते ॥ ॥ ९ ॥

(सश्लाघबहुमानम्।)

विक्लवहृदयममन्ये दयिताशोकातुरं पुरा रामम्।
मन्येऽधुनातिधीरं योऽस्या विरहेऽपि नात्रसन्नात्मा ॥ १० ॥

(पुनर्निध्याय। सव्यथं साधिक्षेपं च।) भो भो हतविधे, केयं तव दुर्विदग्धता, यद्भगवत्या अरुन्धत्यापि स्पृहणीयशीलां महाव्रतामेनां

देवीमनर्हेणानेन दशावैषम्येण योजितवानसि । अयि अयुक्तकारिन्, पश्य पश्य ते दुर्नीतम् । यदनयापि

वस्तव्यं कुणपाशसीम्नि विषमे स्थातव्यमुर्वीतले
तप्तव्यं दयितव्यपायकृतया नक्तंदिवं चिन्तया ।
द्रष्टव्यं च समन्ततः प्रतिभयं बीभत्समुग्रं मुखं
श्रोतव्यं च दुरुक्तजातमहहेत्याक्रन्दितव्यं सदा ॥ ११ ॥

(सावष्टम्भम् ।) अयि दुर्विनीत विधे, अनेन रात्रिशेषेण व्यपेतदुःखां वितन्वन्निमां देवीं, सिंहिकाया इव परोपतापोत्सुकं तवापि हृदयं सहसा समुन्मूलयामि ।

(ततः प्रविशति राक्षसीमध्यगता यथानिर्दिष्टावस्था सीता ।)

**सीता**—(सबाष्पगद्गदाक्रन्दम् ।)

हा लोकनाथ दिननाथकुलाधिनाथ
हा दीननाथ मम जीवितनाथ नाथ ।
हा हा तव प्रणयिनीं व्यसने निमग्नां
कस्मान्न पश्यसि चिरं जगदेकवीर ॥ १२ ॥

ननु महात्मन् सत्यसंध,

रक्षाकृते कृपणसज्जनसंश्रितानां
शस्त्रं करे विदधतः स्वजने जनेऽस्मिन् ।
शोच्यां दशामुपगतेऽपि कृपानिधे ते
कस्मात्कृपा चिरयति द्रुतयुक्तकारिन् ॥ १३ ॥

ततश्च

काके खरादिषु च दृष्टजयेन संख्ये
हत्वाततायिनमिमं सगणं शरेण ।
विष्णुर्महीमिव सुरारिकुलप्रमाथि-
न्नस्मात्समुद्धर महाप्रलयार्णवान्माम् ॥ १४ ॥

(नेपथ्ये)

भो भो अशोकवनिकामार्गगता जनाः, दूरमपसरत । यतः

यस्याज्ञा दिक्पतीनामधिमणिमकुटं भाति मन्दारमाला
यद्यत्स्याद्रत्नभूतं जगति तदखिलं भोग्यतामेति यस्य ।
सोऽयं पञ्चेषुपञ्चाननशरनखरक्रूरघाताहतात्मा
रक्षोराड्गन्धहस्ती जनकदुहितरं याति निर्वाणकाङ्क्षी ॥

(चूलिका ।)

**हनूमान्**—(विलोक्य ।) कथं प्रदीपहस्तेन परितः समावृण्वता महता युवतिमण्डलेन प्रदर्श्यमानवर्त्मा पदेपदे प्रस्खलन्नित एवायाति स दशकंधरहतकः । (सीतां विलोक्य । सबहुमानम् ।) अहो चारित्रगोपने संभ्रमो देव्याः, न तु स्वात्मगोपने यद्दुर्दशापरीतं स्वात्मानमगणयन्त्येवा तस्य धूर्तस्य दर्शनमात्रेण संभ्रान्ता स्तनोदरं जानुभ्यां पाणिभ्यां च प्रच्छादयन्ती सोद्वेगं परावर्तते । नूनमस्याः शीलं प्रख्यापयितुकामस्यैवायं विधातुरारम्भः, नूनं तिरस्करिष्यत्येनमेषा देवी । तदवहितः शृणोमि (इति संवृताकारस्तिष्ठति ।)

(ततः प्रविशति यथानिर्दिष्टो रावणः ।)

**रावणः**—(सचिन्तमात्मगतम् ।)

अलब्ध्वा यद्दुःखी भवति तदवाप्तौ स सुखितो
मनःकान्तां लब्ध्वाप्यजनि न सुखं मे जनकजाम् ।
त्रियामा तच्चिन्ताकलितबहुयामा प्रतिदिनं
क्षयं शून्ये तल्पे व्रजति सह संकल्पितशतैः ॥ ११ ॥

प्रत्यवसरं सक्रोधं निराचक्षाणायामपि तस्यां तत्स्वभावाभिज्ञतया न क्रोद्धुमुत्सहते मे मानसम् । तथा हि

अतिसुरभि समन्तात्कैतकं कण्टकाढ्यं
मधु रसयितुमर्हं संवृतं मक्षिकाभिः ।

मणिरपि फणिमूर्धन्यन्धतामिस्रहारी
वरतनुरतिचण्डीत्येष वस्तुस्वभावः ॥ १७ ॥

न हि स्वभावोऽन्यथयितुं शक्यः। (क्षणं विभाव्य।) अधुना रामानुबन्धि तस्या मनः कालेन बलवन्मयि पतिष्यति। यतः

नैकान्तिकं मृगदृशां पुरुषेषु सख्यं
रज्यन्ति ता विपरियन्ति च तत्क्षणेन।
नन्वीक्ष्यते हि कमलात्कमलाधिवासा
तद्द्वेषिणं कुमुदबन्धुमुपाश्रयन्ती ॥ १८ ॥

(प्रकाशम्।) प्रिये धान्यमालिनि, अद्य मम कोऽपि स्वप्नो बभूव।

**धान्यमालिनी**—णाह, तत्थ को विसेसो। (क)

**रावणः**—भयानकस्तत्र कोऽपि वानरो दृष्टः।

**धान्यमालिनी**—(स्वगतम्।) असोहणं एदं (प्रकाशम्।) किं तेल्लोक्कक्केक्कमल्लो वाली (ख)

**रावणः**—न हि न हि। ततोऽपि भयानकः खल्वेषः।

**धान्यमालिनी**—(सभयम्।) देण किं किदं (ग)

**रावणः**—तेन हि प्रथमं कुमारोऽक्षः पशुमारं मारितः।

**धान्यमालिनी**—(सोरस्ताडम्।) हा वच्छ अक्ख, कहं चिट्ठइ महावीरे रक्खसराए, अव्वापण्णे महापरक्कमे कुंभअण्णे, जीवइ अ महाबले मेहणादे, तुमं पत्थिदो सि (घ)

**रावणः**—अयि, स्वप्नः खलु वर्ण्यते।

(क) नाथ, तत्र को विशेषः (ख) अशोभनमेतत्। किं त्रैलोक्यैकमल्लो वाली (ग) तेन किं कृतम्। (घ) हा वत्स अक्ष, कथं तिष्ठति महावीरे राक्षसराजे, अव्यापन्ने महापराक्रमे कुम्भकर्णे, जीवति च महाबले मेघनादे, त्वं प्रस्थितोऽसि।

धान्यमालिनी—कहं सिविणो, ण परमत्थो । मए दु सच्चं एव्व वच्छो अक्खो णिहदो त्ति चिंदिदं । तदो तदो (क)

रावणः—ततः स दुष्टवानरः पश्यत एव मे सीतामादाय पलायितः ।

धान्यमालिनी—असंभाविदं एदं (च)

रावणः—(सकौतुकम् ।) प्रिये, तथैव । (पुरोऽवलोक्य । स्वगतम् ।) कथं मद्दर्शनेन मुक्तासनासु सर्वासु राक्षसीषु, एका सीता केवलं संभ्रान्ता परावर्तते । नूनमधुनापि तदवस्थैवैषा । यावद्रामो जीवति, तावदियमलभ्यैव । अपि नाम स क्षत्रियवटुः

रक्ष्यः—(साञ्जलिबन्धम् ।) जअदु (छ)

रावणः—(स्वगतम् ।) केनाप्युपायेन हन्येत

रक्ष्यः—रक्खसराओ (ज)

रावणः—(सव्यथमात्मगतम् ।) किं क्षत्रियवटुर्जयतु, हन्येत राक्षसराजः । कथमेतत् ।

धान्यमालिनी—णाह, संभाविदं एव्व एदं (झ)

रावणः—(स्वगतम् ।) कथं संभावितमेवैतत् । (प्रकाशम् ।) अयि किं संभावितम् ।

धान्यमालिनी—जइ गावाओ साअरे पिलवंदि, ता महाराअस्स हत्थगदं आमिसं अण्णो ओहरिस्सदि त्ति संभाविदं एदं (ञ)

रावणः—(विहस्य । स्वगतम् ।) ऋजुकमेवैषा वक्ति, मम तु दुर्निमित्तपिशुनोपश्रुतिः । (वामबाहौ स्पन्दनं सूचयित्वा ।) इदमपरमनिमित्तम् । एवं च

---

(क) कथं स्वप्नो, न परमार्थः । मया तु सत्यमेव वत्सोऽक्षो निहत इति चिन्तितम् । ततस्ततः (च) असंभावितमेतत (छ) जयतु । (ज) राक्षसराजः (झ) नाथ, संभावितमेवैतत् । (ञ) यदि ग्रावाणः सागरे प्लवन्ते, तन्महाराजस्य हस्तगतमामिषमन्योऽपहरिष्यतीति संभावितमेतत् ।

स्वप्नेऽतिभीमकपिदर्शनमात्मजार्तिः
स्पन्दोऽप्यदक्षिणभुजे दुरुपश्रुतिश्च ।

(विमृश्य । सोत्सेकम् ।)

भीरोरिमानि भयदानि न मादृशस्य
वात्याहतश्चलति किं तरुवन्महीध्रः ॥

( उपसृत्य । प्रकाशम् ।) अयि जनकेन्द्रनन्दिनि, त्वं पांसुरूषिते महीतले निषीदसि, अवसीदन्ति भूयस्तरां मलीमसानि ममेमान्यङ्गानि । त्वं निराहारा वर्तसे, अहं क्षामक्षामः संवृत्तोऽस्मि । त्वं किमपि वृथा चिन्तयन्ती स्वयमवतिष्ठसे, अहं प्रजागरावस्थया परिगृहीतोऽस्मि । त्वं वस्त्राभरणाद्याकल्पादिभिर्न रमसे, अहं बलवदरत्या दुःस्थितोऽस्मि । किं बहुना ।

सज्जेषु भोगनिवहेषु सुदुर्लभेषु
सज्जे च मय्यपि तवेप्सितदानदक्षे ।
कस्माद्विषीदसि वृथा सति हर्षकाले

हनूमान्—अहो धूर्तप्रलपितस्यापि घुणाक्षरन्यायेन क्वचिदर्थवत्ता, यदयं देव्या हर्षकालमुपस्थितमाह ।

रावणः —स्वात्मानमुद्धर विवेकबलेन दुःखात् ॥ २० ॥

विवेकबलेनोद्धरणं च प्रार्थयमानयोरुभयोः, गुणागुणपर्यालोचनया गुणहीनमपहाय गुणाधिके प्रीतिबन्धनमेव । अतः शृणु तस्य मिथ्यातापसस्य मम च व्यापारान् ।

ज्येष्ठोऽसावनुजन्मना स्वनगराद्विद्रावितः काननं
ज्येष्ठस्यैव पुरीमिमां स्वमहसा भुञ्जे तथा पुष्पकम् ।
सेव्यास्तस्य वनौकसो मम सुरा भृत्यास्तपश्छद्मना
श्राम्यत्येष सुखी सदास्मि सरसैः कान्ताविलासोत्सवैः ॥

हनूमान—अहो धौर्त्यमपि प्रशंसनीयं धूर्तस्य ।

**रावणः**—तदेवं पर्याकोपनया निर्गुणे रामे स्नेहं तदनुबन्धि दुःखं च दूरादेव परिहर। ततश्च जानकि,

तवास्मि दासो मयि धेहि सौहृदं तवैव सर्वं वसु यन्मयि स्थितम्।
वृणीष्व यच्चान्यदपि प्रियं प्रिये ददामि भूयोऽपि वा स्वजीवितम्॥

(इति पादयोः पतति।)

**सीता**—(सक्रोधं साधिक्षेपं च।)

अयि परेहि पिशाच निशाचर त्वरितमर्पय मां खरमारके।
यदि न वाञ्छसि तस्य शरानले सह कुलेन बलेन च संक्षयम्॥

अयि दुरात्मन्,

न खलु रक्षसि राक्षसमारकप्रणयिनी प्रणयं जड यास्यति।
तिमिरमूलनिकाषकलोचिता सजति किं तमसा द्युमणिद्युतिः॥

ननु विधे, अस्य खलु पातकिनः

किमिति वदतः पापं जिह्वा विदीर्य न शीर्यते
किमिति परुषस्फोटस्फोटं [illegible]टन्ति न वा दृशः।
किमिति कृमिभिः पूयप्रायं निर[illegible]मान्तरैः
खगमृगकुलैः खादं खादं वपुर्न विकृष्यते॥ २५॥

(इति सनिर्भर्त्सनं परावर्तते।)

**हनूमान्**—(सहर्षम्।) धर्मपरिग्रहेण निर्भयत्वं देव्याः।

**रावणः**—(सक्रोधम्।) किमात्थ दुर्भगे, किमात्थ। एष त्वां नाशयामि। (इत्युपसर्पति।)

**धान्यमालिनी**—(ससंभ्रमं रावणं करे गृहीत्वा।) णाह, किं एदम्,

पच्चग्गसीहुकलसी ण भिंदणिज्जा खु उण्हेत्ति।
सा उवउज्जइ पच्चा अज्ज पुराणं सुरं पिज्ज॥ २६॥

---

(ट) नाथ, किमेतत्। प्रत्यग्रशीधुकलशी न भेदनीया खलूष्णेति।
सोपयुज्यते पश्चादद्य पुराणां सुरां पिब॥२६॥

ता किदं इमाए रोसुच्चग्गेण (ट) ( इति तमालिङ्ग्य बलान्निवारयति। )

**रावणः**—( परावृत्य । स्वगतम् ।) दिष्ट्या क्रोधपराभूतः सन्मनोरथभाण्डभूतामिमां वनितां न नाशितवानस्मि । अन्यथा बलवदधिक्षिप्तोऽस्मीति वितथयाच्ञोऽस्मीति चाकारणमेतत् । यैः कैश्चिदक्षरैपि वा यथाकथंचिदनया संलापितोऽस्मीति भवत्येव महानयं लाभः ।

ततश्च ।

**अदृष्टिक्षेपोऽस्याः प्रणयमधुरापाङ्गसुभग-**

**स्तिरस्कारः क्रूरः श्रवसि मम संजल्पितसुखः ।**

**यदन्यन्मर्माविित्तदपि हृदि धत्ते रतिकला-**

**महो कामस्याज्ञा मसृणयति यारुंतुदमपि ॥ २७ ॥**

एवं स्थिते किमु वक्तव्यमस्याः प्रियालापादिकमत्यन्तहृदयंगममेवेति, तदेषा मया यावज्जीवं रक्षणीया । तदेवमादिशामि । (प्रकाशम् ।) ननु राक्षस्यः, विदितमेवेदं, यथा—हठाद्धर्षितया रम्भया वितीर्णशापतया, नाहं बलात्परदारानुपैमीति ।

**हनूमान्**—दिष्ट्या बहूपकृतं रम्भया कुलस्त्रीणाम् ।

**राक्षस्यः**—णाह, विण्णादं एदं (ठ)

**रावणः**—तद्विदित्या खल्वनया धृष्टमेवमुदीर्यते । ततश्च मया समयोऽस्या विहितः—' अर्वागेव संवत्सरात्स्वयमेव मम शय्यामारोह, पूर्णे तु संवत्सरे, ममावश्यां त्वां मम प्रातराशाय सूदाः पक्ष्यन्ति ' इति ।

**राक्षस्यः**—णाह, किं, सो समओ संपुण्णो (ड)

**रावणः**—नहि नहि । तस्य हि द्वौ मासाववशिष्टौ । तावदेवैनां चतुर्भिरप्युपायैर्मम वश्यां कुरुत ।

---

तत्कृतमस्यां रोषोत्सर्गेण (ठ) नाथ, विज्ञातमेतत् (ड) नाथ, किं स समयः संपूर्णः ।

**राक्षस्यः**—पडिगहीदो महाराअस्स संदेशो (द)

**रावणः**—एहि धान्यमालिनि, (इति कतिचित्पदानि गत्वा, पुनर्निवृत्य।) ननु राक्षस्यः, तुरीयोपायप्रयोगे वाग्दण्डादृते दण्डान्तरं न प्रयोक्तव्यम्। तथा साधयत। (इति निष्क्रान्तः।)

**राक्षस्यः**—(उपसृत्य।) अइ सीदे, णं आणीदासि पारेसमुद्दं अमाणुसगोअरं देसं। तुए वि पडिक्खिदो दे पच्चू किदे सुमहंदो कालो, ता अलं इत्तिएण तस्स सेवणेण। ण खु जोव्वणे अदिक्कंदे तुमं रावणो रामो वा को वि पेक्खिस्सदि। पत्थअदि अ बलवं एसो रक्खसराओ, इमं सेवंदी तुमं अह्माणं सेवणिज्जा हविस्ससि। किमत्थं सुंदेरं रूवं जोव्वणं अ काणणचंदिमोवमं कुणइ। अण्णं अ। सो मिच्छातावसो सुअं एव्व मिदो वा, रक्खसेहिं हदो वा, णिरासाए णिजं देसं गदो वा। ता भद्दे, अणत्थअं एदं मणोरज्जं उज्झिअ, सुवेरं उवट्ठेहि रक्खसराअं, उवचिट्ठंदु तुमं सिद्धीओ (ण)

**सीता**—आः किमिदं लोकशास्त्रविगर्हितमनर्थकं च संजल्पितम्।

**राक्षस्यः**—(सक्रोधम्।) कहं एदं अणत्थअं संजल्पिअं अ। (त)

**हरिजटा**— अइ वराइ, कुलेण रूवेण सिरीए केण वा महाराआदो सो रामो अहिओ, जेण एदं अणत्थअं संजल्पिअं अ। (थ)

---

(द) प्रतिगृहीतो महाराजस्य सन्देशः। (ण) अयि सीते, नन्वानीतासि पारेसमुद्रममानुषगोचरं देशम्। त्वयापि प्रतीक्षितस्ते पत्युः कृते सुमहान् कालः, तदलमियता तस्य सेवनेन। न खलु यौवनेऽतिक्रान्ते, त्वां रावणो रामो वा कोऽपि प्रेक्षिष्यते। प्रार्थयति च बलवदेष राक्षसराजः, इमं सेवमाना त्वमस्माकं सेवनीया भविष्यसि। किमर्थं सुन्दरं ते रूपं यौवनं च कानन‍चन्द्रिकोपमं करोषि। अन्यच्च। स मिथ्यातापसः स्वयमेव मृतो वा, राक्षसैर्हतो वा, निराशया निजं देशं गतो वा। तद्भद्रे, अनर्थकमेतन्मनोराज्यमुज्झित्वा, स्वैरमुपतिष्ठस्व राक्षसराजं, उपतिष्ठन्तां त्वां सिद्धयः (त) कथमेतदनर्थकं संजल्पितं च (थ) अयि वराकि, कुलेन रूपेण श्रिया केन वा महाराजात् रामोऽधिकः, येनैतदनर्थकं

**विकटा**—णं सच्चं एव्व एदं वअणं 'रण्णमिअस्स णअरसुहं ण रोअइ' त्ति, जं उवट्ठिदे वि सुदुल्लहे भग्गे एसा णिजं कंदमूलखंडणं एव्व बहु मण्णेदि (द)

**विनता**—अइ भद्दे, कहेहि तुह हिअअट्ठिदं दोहदं, जेण रक्खसराअं सेविस्ससि (क्षणं स्थित्वा । सक्रोधम् ।) अइ दुब्भए, कहं तूण्हीका होसि (ध)

**प्रघसा**—सहि विणदे, चिरादो मह बलवंदो दोहदो णिद्दोसणरमंसखादणे, ता सुंदेरं णिद्दोसं अ इमाए एदं सरीरं किवाणेण पव्वसो छिंदूण खादेमि। (न)

**एकजटा**—कहं तुमं एक्का एव्व णरमंसखादणे दोहदवंदी, सव्वा एव्व अह्मे तहाविहा हुवामो। ता इमाए सरीरं खंडं खंडं छिंदूण समंसं करणिज्जं (प)

**चण्डोदरी**—एक्कजडाए मंदिदं एव्व सुमंदिदं, ता तुज्झे सुरं ओहरध, अहं इमिणा सूलेण इमाए सरीरं खंडं खंडं कुणमि (फ)
(इति शूलमुद्यच्छति ।)

**दुर्मुखी**—अहो रक्खसीओ, क्खणं चिट्ठद, महाराओ खु इमाइ पढमं दोहदवंदो, ता पुणो वि पुच्छेमि । अइ जाणइ,

---

सञ्जल्पितं च (द) ननु सत्यमेवैतद्वचनं 'अरण्यमृगाय नगरसुखं न रोचते' इति, यदुपस्थितेऽपि सुदुर्लभे भाग्ये, एषा निजं कन्दमूलखण्डनमेव बहुमन्यते। (ध) अयि भद्रे, कथय तव हृदयस्थितं दोहदं, येन राक्षसराजं सेविष्यसे । अयि दुर्भगे, कथं तूष्णीका भवसि । (न) सखि विनते, चिरान्मम बलवान् दोहदो निर्दोषनरमांसखादने, तत्सुन्दरं निर्दोषं चास्या एतच्छरीरं कृपाणेन पर्वशश्छित्वा खादामि । (प) कथं त्वमेकैव नरमांसखादने दोहदवती, सर्वा एव वयं तथाविधा भवामः । तदस्याः शरीरं खण्डं खण्डं छित्वा समांसं करणीयम् । (फ) एकजटाया मन्त्रितमेव सुमन्त्रितं, तद्यूयं सुरामाहरत, अहमनेन शूलेन अस्याः शरीरं खण्डं खण्डं करोमि (ब) अहो राक्षस्यः, क्षणं तिष्ठत । महाराजः खल्वस्याः प्रथमं दोहद-

एक्कत्थ रक्खसेंदो परत्थ एसो णिसाअरीवग्गो ।
तुमए दोहद्दवंदो संपादि का तुज्झ पडिवद्दी ॥ २८ (ब)

**सीता**—अयि, कथं भीषयथ । चारित्रप्राणा खल्वहम् । अतः शृणुत मे प्रतिपत्तिम् ।

यदि कृन्तथ पर्वशः शरीरं यदि वा खादथ खण्डशस्तथापि
न करिष्यति जानकी विगीतं किमसद्भिःश्रुतिदारणैः प्रलापैः॥

**राक्षस्यः**—(सक्रोधतर्जनम् ।) किं भणासि दुब्भए, किं भणासि, किं अह्माणं एसो पलावो, ण हिदोवदेसो, हलाओ, उट्ठेह उट्ठेह । अज्ज एव्व इमं खादूण, सुअं एव्व सोएण मिदा सा हदासेत्ति महाराअस्स विण्णप्पेह्मो । (भ) (इति सरभसमुत्तिष्ठन्ति ।)

(पटाक्षेपेण । प्रविश्य ।)

**अनला**—दूरं ओसरह रक्खसीओ, दूरं ओसरह। उवट्ठिदं खु अच्चाहिदं अह्माणं । (म)

**राक्षस्यः**—हला अणले, कहेहि कहेहि किं अच्चाहिदं (य)

**अनला**—अज्ज खु को वि दुट्ठवाणरो परदारओरस्स रक्खसस्स आसिसुट्ठविरं सव्वं एव्व णअरं अवक्खंदिस्सं त्ति गज्जंदो लंगं पविसिअ तत्थ तत्थ संचरइत्ति सुणीअदि । (र)

---

वान् । तत्पुनरपि पृच्छामि, अयि जानकि ।

एकत्र राक्षसेन्द्रः परत्रैष निशाचरीवर्गः ।
त्वयि दोहदवान् संप्रति का तव प्रतिपत्तिः ॥२८॥

(भ) किं भणसि दुर्भगे किं भणसि, किमस्माकमेष प्रलापो, न हितोपदेशः । सख्यः, उत्तिष्ठतोत्तिष्ठत । अद्यैवेमां खादित्वा, स्वयमेव शोकेन मृता सा हताशेति महाराजाय विज्ञापयामः । (म) दूरमपसरत राक्षस्यः, दूरमपसरत । उपस्थितं खल्वत्याहितमस्माकम् । (य) हला अनले, कथय कथय किमत्याहितम् । (र) अद्य खलु कोऽपि दुष्टवानरः परदारचोरस्य राक्षसस्याशिशुस्थविरं सर्वमेव नगरमवस्कन्दिष्यामीति गर्जन् लङ्कां प्रविश्य तत्र तत्र सञ्चरतीति श्रूयते ।

**राक्षस्यः**—(ससंभ्रमम् ।) अइ, कहेहि केण एदं कहिदं (ल)

**अनला**—णं पविट्ठमेत्तएण एव्व देण वाणरेण णिज्जिदा देवदा लङ्का णिव्वेदेण बह्मलोअस्स पत्थिदा मह तादे जुवराअविहीसणे णिवेदिवंदी । (य)

**राक्षस्यः**—(ससाध्वसम्) कहं लङ्काए णिज्जिदाए कहिदं, ता सच्चं एव्व सव्वं, हा कि कुणमो, हा वच्छाओ, हा दारिआओ कहं हुवध, (श) (इति सोरस्ताडमाकुश्य पलायिताः।)

**अनला**—हला सीदे, समस्ससिहि समस्ससिहि। अहं वि दं वाणरं पेक्खिदुं गमिस्सं । (ष) (इति निष्क्रान्ता ।)

**हनूमान्**—(सकौतुकम् ।) कथं क्षणेन निःशलाकं संवृत्तम् । अहो अत्युत्कटमेव कृत्स्नं रक्षसां चेष्टितम् ।

**सीता**—हा दुहितृवल्लभे मातः, पश्य पश्यासकृत्तर्जनभर्त्सनादिना राक्षसीभिरुद्वेज्यमानां ते प्रियदुहितरम् । हा तात मिथिलेश्वर, कथं योगीश्वरान्तेवासिनो भवतोऽपि वाङ्मयि वितथा भवति, यत्त्वं मामतीव धन्यां पदे पदे श्लाघसे । किमिदमेव मे भागधेयम् ।

**हनूमान्**—(सौत्सुक्यम् ।) किमसौ योगीश्वरस्य याज्ञवल्क्यमहर्षेरन्तेवासी तत्रभवान् जनकराजः, स योगीश्वरोऽहं च भगवतः सवितुरन्तेवासितया सतीर्थ्यौ सावित्रौ च स्वः । यथा तदपत्यत्वेन रामसुग्रीवौ भवतः। तथा तच्छिष्यपरंपरया एषा देव्यपि सावित्री भवति।

---

(ल) अयि, कथय केनैतत्कथितम् । (य) ननु प्रविष्टमात्रेणैव तेन वानरेण निर्जिता देवता लङ्का निर्वेदेन ब्रह्मलोकाय प्रस्थिता मम ताते युवराजविभीषणे निवेदितवती (श) कथं लङ्कया निर्जितया कथितं, तत्सत्यमेव सर्वम् । हा किं कुर्मः । हा वत्साः, हा दारिकाः, कथं भवथ । (ष) हला सीते, समाश्वसिहि समाश्वसिहि । अहमपि तं वानरं द्रष्टुं गमिष्यामि ।

एवं च सहेतुकमेवेदं नरवानरयोः सख्यादि । अतः शृणोमि शेषमपि ।

**सीता**—हा आर्ये कौसल्ये, प्रस्थानकाले यथा मम विरहो भवतीं पीडयामास, न तथा पुत्रविरहोऽपि । सा त्वं ममेमामवस्थामाकर्ण्य, जराजर्जरितैरङ्गैः कथं सहिष्यसे । अम्ब, कथं वा भविष्यसि ।

**हनूमान्**—अहो उदारोऽध्यवसायः, यदियमस्यामप्यवस्थायामात्मनिमित्तं न परितप्यते, किं त्वात्मनिमित्तेन गुरुजनक्लेशेन ।

**सीता**—हा भगवति अरुन्धति, कथं भवत्या आशीर्वचनमपि मयि विफलं संपद्यते, यद्वनाय प्रणमन्तीं मां समाश्लिष्य 'वत्से जनकेन्द्रनन्दिनि, एवं पतिमनुसरन्तीं त्वां नित्यमनुसरन्तु सर्वाणि श्रेयांसि' इति स्वयमाशासिष्ठाः ।

**हनूमान्**—ननु देवि, अनुसरन्त्येव श्रेयांसि यशसा सह ।

**सीता**—अथवा किमनेनारण्यरुदितेन, न शक्नोमि जीवितं धारयितुम् । तदस्मिन् हस्तग्राह्ये विटपे वेण्युद्ग्रथनेन परलोकाय प्रतिष्ठे, यावन्न राक्षसीवर्गः समापतति । (इत्युत्थाय, कण्ठे वेणीमुद्ग्रथ्नाति ।)

**हनूमान्**—हा धिक् । अत्र किमञ्जसा कार्यम् । (इति चिन्तयति ।)

**सीता**—(सवेण्युद्ग्रथनं सबाष्पं च ।) हा नाथ रघुवीर, निसर्गसिद्धापि ते कृपा किमेवं मयि कृपणेव संवृत्ता । किं वा मनोमात्रलक्षिते लक्ष्येऽप्यकुण्ठितानि तवास्त्राणि मम कृते कुण्ठितानि संवृत्तानि । किं नु वा अस्मज्जीवातुः सौमित्रिरपि मयि निरनुक्रोशः संजातः । नाथ, न खलु मया जिजीविषया सुदुःसहेयमवस्था सह्यते । किंतु

तथा न माता न पिता न चात्मा
प्रेष्ठो जनोऽन्योऽपि न ते यथाहम् ।
तथा मम त्वं च ततोऽसवोऽमी
धृतास्त्वदर्थे कथमप्यनास्थाः ॥ १० ॥

हनूमान्—अवितथमाह देवी ।

सीता—तथापि न शक्यतेतरां सोढुमियमवस्था । अतो भवदनुमत्या विनापि स्वात्मत्यागायोद्यतोऽयं जनः । तत्क्षम्यताम् ।

हनूमान्—अहो अद्भुतोऽयं समुदाचारः, यदात्मत्यागायापि पत्युरनुमतिरपेक्ष्यते ।

सीता—(सबाष्पगद्गदम् ।) ननु नाथ,

यो नाम राम तव नाम सकृद्गृणाति
नासौ विपद्यत इति स्थितमप्रकम्प्यम् ।

हनूमान्—हन्त गृहीत उपदेशो रामहृदयस्य ।

सीता—

तं त्वामनुव्रतजनोऽपि विपद्यते चे-
दास्तामथापि कथमत्र विपत्तिरीदृक् ॥ ११ ॥

अथ वा पुराकृते बलवत्तरे च मम दुष्कृते विपरिणममाने, किं निर्दोषे दोषारोपणेन । तदेवमर्थयामि ।

चारुस्मितं सरसिजोदरचारुनेत्रं
नित्यप्रसादसुमुखं मुखमिन्दुकान्तम् ।
नाथ प्रदर्शय जनो जननान्तरेऽयं
मा भूत्त्वया विरहितश्च विपद्गतश्च ॥ १२ ॥

यदि निरयोपमेऽस्मिन्नैर्ऋतावासे स्वात्मना संनिधातुम् हृणीयसे, तदा स्वयमन्तर्हितः सन् कामपि गिरमुदीरय । तदपि पर्याप्तमिदमवस्थस्यास्य जनस्य ।

हनूमान्—(ससंभ्रमम् ।) हन्त दर्शितः उपायः समाश्वासनाय । अक्षमं चेतः परं विलम्बितुम् । तदेवं श्रावयामि (किंचिदुच्चैः ।)

महति सवितृवंशे लोकपुण्यैः पुराणैः
कृतजनिरजसूनोः कोसलेन्द्रस्य पुत्र्याम् ।

सकलभुवननेता दुर्जनानां विनेता

जयति जयति रामो जानकीप्राणनाथः ॥ १३ ॥

**सीता**—(आकर्ण्य, सकौतुकम् ।) कथं म्लेच्छदेशे वेदध्वनिः, यदत्र रामगुणस्तवः श्रूयते । (उद्बन्धनं विस्रस्योर्ध्वमवलोक्य च, सवितर्कम् ।) कथमेषा वानरीया वाक्, न त्वव्यक्ता। कापेयं रूपं मानुषी वाक् । कथमेतत् । इदमपि मायाविनः मायाप्रयोगान्तरम्। तत्किं कालहरणेन (इति पुनरपि वेण्युद्ग्रथनाय त्वरते ।)

**हनूमान्**—(सव्यथम् ।) हन्त, सर्वमाशङ्कनीयं संवृत्तम् । किमसाकृतमस्तु । (चिन्तयति।)

**सीता**—(पक्षिनिनादेन सह निमित्तान्युपलक्ष्य । सपुलकोद्भेदम् ।)

एतानि तानि हि शुभानि निमित्तजाता-

न्यालक्षितानि मम यानि विवाहकाले ।

आत्मा प्रसीदतितरां शुभवागयं च

पक्षी प्रियागमकथां धुरि शंसतीव ॥ १४ ॥

तदेनं रामदूतमिव तर्कयामि । (अञ्जलिं बद्ध्वा ।) यदि रामस्य कृपा प्रत्यासन्ना, यदि च मम भाग्यशेषोऽस्ति, तत्किं विलम्बेन ।

**हनूमान्**—(अवरुह्य ।) देवि, कपिराजस्य सुग्रीवस्य सचिवो हनूमान्नाम रामदासोऽहम् । रामलक्ष्मणौ कुशलिनौ सन्तावत्रभवत्याः कुशलं पृच्छतः । (इति प्रणमति ।

**सीता**—ननु भोः, अपि त्वं परमार्थतो वानरो रामदासश्च, उत यः कोऽपि मायावी राक्षसः । ब्रूहि तत्त्वम् ।

**हनूमान्**—(सप्रश्रयम् ।) देवि, कथमितः परं राक्षसाशङ्का, नेदिष्ठो हि सर्वसंहारकालस्तेषाम्।

**सीता**—तेन हि कुतूहलितास्मि श्रोतुं युष्माकं रामसंबन्धकारणम् ।

**हनूमान्**—देवि, अस्ति सुग्रीवो नाम कपीन्द्रः । स कस्मिंश्चि-न्निमित्ते बलिना भ्रात्रा वालिना विद्रावितः ।

**सीता**—धिग्धिग्भ्रातृद्रोहिणम्, ततस्ततः ।

**हनूमान्**—ततो भवतीमन्विष्यागतौ राघवौ तद्भयार्तः सुग्रीवः शरणं प्रपन्नः ।

**सीता**—उपरि ज्ञायत एव आश्रितवत्सलेन मे प्रभुणा भ्रातृद्रोहिणं तं निहत्य कपिराज्येऽभिषिक्तः सुग्रीव इति । ततः किम् ।

**हनूमान्**—देवि, तथाभिषिक्तेन तेन सुग्रीवेण भवतीमन्वेष्टुं तत्र तत्र प्रहितेषु वानरानीकेषु, दक्षिणाशां प्रति प्रस्थिता वयं भवतीमलब्ध्वा, नियमितकालातिक्रमणेन तीक्ष्णदण्डाद्राज्ञो भीताः सागरोपान्ते प्रायमुपविष्टाः स्मः ।

**सीता**—(सव्यथम् ।) कथं मत्कृते बहूनां क्लेशः, अथ वा सीतासंबन्धि यत्किंचिदपि क्लिश्यत एव । ततस्ततः ।

**हनूमान्**—ततस्तत्र यदृच्छयागतेन प्रसङ्गागतं भ्रातुर्जटायुषो वधं निशम्य प्रकुपितेन सुदूरचक्षुषा गृध्रराजेन संपातिना पुनरुज्जीविताः स्मः ।

**सीता**—(सहर्षम् ।) ननु वक्तव्यं स्वयं मृतेनापि तातजटायुषा वयमुज्जीविताः स्म इति (सबहुमानम् ।) हा तात जटायो, साधु साधु ।

**परकार्यपराः स्वजीवितान्तं विरला हन्त महाशया जगत्याम् ।**
**अपि जीवितदानतः परस्तादुपकुर्वन् हि सुदुर्लभो भवादृक् ॥**

तत्प्रीयतां भवाननया कृतज्ञताविज्ञप्त्यैव ।

**हनूमान्**—ननु देवि, इतो हि प्रत्युपकारो निष्क्रयः कृतज्ञेनास्मत्प्रभुणा ।

**सीता**—कथमिव

हनूमान्—

प्रथयति निजसंस्थया खगेन्द्रे
दशरथभूपतिमित्रतां विभुर्नः ।
सपदि स विधिसंस्कृतं व्यतानी-
दशिथिलसख्यममुं दिवि स्वपित्रा ॥ १६ ॥

सीता—(सहर्षबहुमानम् ।) उचितज्ञः खलु मे प्राणनाथः। ततस्ततः।

हनूमान्—ततः प्रहृष्टैर्वानरैरनुप्रेषितोऽहं कुशलवार्ताहरोऽस्मि ।

सीता—(किंचिदाश्वस्य।) भो हनूमन्, दिष्ट्या संतर्पिते मे श्रवसी रामलक्ष्मणयोः कुशलोदन्तेन। कथय पुनरपि रामगुणान्।

हनूमान्—देवि, अनन्ताः खलु सागरे रत्नविशेषा राघवे गुणविशेषाश्च। अनतिलङ्घनीयं चात्रभवत्याः शासनम्। तदिदमभिधीयते।

धर्मस्तस्य विभोः पिता च जननी धर्मः परा देवता
धर्मार्थं विसृजेदसौ तु सकलं नो धर्ममन्यार्थतः।
धर्मस्यैव कृते स धर्मनिरतो नार्थाय कामाय वा
किं वोक्तैः सुकृतेन नः समुदितो धर्मोऽद्य रामात्मना॥

देवि, यद्यद्यापि न प्रत्येषि, तद्गृहाणेदमभिज्ञानम् (इति रामाङ्गुलीयकमर्पयति ।)

सीता—(गृहीत्वा । सहर्षम् ।)

मुद्रेऽङ्गुलिप्रणयिनी कमितुः सुवृत्ता
त्वं साक्षिणी महितकर्तुरशेषकृत्ये ।
तन्नामरक्षितमुखी च यथाहमालि
मा भून्ममेव तव जातु वियोगदुःखम् ॥ १८ ॥

(इति मुहुर्मुहुस्तां मुद्रां चुम्बति ।)

हनूमान्—(सहर्षमात्मगतम् ।) दिष्ट्या सफलमिदानीं मे समुद्रलङ्घनं, दिष्ट्या सफलं च रामदास्यम् ।

**सीता**—(सहर्षबहुमानम्।) ननु महोपकारिन् हरीन्द्र,

मतिमानसि शौर्यवान् परार्थे जनिमान्विक्रमवानसि प्रगल्भः।
हनुमन्निति ते नुतिर्न पूर्णा जय यावद्रघुनाथपुण्यकीर्तिः॥३९॥

(इति श्लाघते)

**हनूमान्**—परमनुगृहीतोऽयं दासजनः ।

**सीता**—(सबाष्पम् ।) ननु हनूमन् , त्वयापि प्रत्यक्षित एव मे क्लेशः । ब्रूहि कियन्तं कालमेव मया क्लेशितव्यम् ।

**हनूमान्**—देवि, प्रक्षीणं खलु ते व्यसनम् । यदि मन्यसे, तदारोह मे पृष्ठम् । अद्यैव त्वां रामेण सह संगमय्य, वीतशोकां करिष्यामि ।

**सीता**—(विहस्य ।) इदं किल ते कपित्वं, यत्त्वमल्पीयसानेन वर्ष्मणा मामादाय पारावारं तितीर्षसि ।

**हनूमान्**—देवि, कथमेवं मन्यसे, अद्य मया

पुच्छाग्रेण नियम्य राक्षसपतिः किं दिक्षु विक्षिप्यता-
माहोस्विन्नगरी समं निशिचरैरेषा समुत्पाट्यताम् ।
किं वासौ क्रियतां स्थलीव सुगमः प्रत्यूहभूतोऽम्बुधि-
र्नाहं प्राकृतवानरः पवनभूस्तुल्योऽस्मि तस्यौजसा ॥४०॥

तत्पश्य मे रूपम् । (इति विश्वरूपं गृह्णाति ।)

**सीता**—( सविस्मयं सबहुमानं च ।) ननु मारुते, संप्रतिपन्नमेवेदं त्वयि। न ह्यपरीक्षितगुणविशेषं रामः कार्येषु नियुङ्क्ते, विशेषतो मत्समीपे । तदर्हस्येव मया सह संभाषितुं मां नेतुं च । अहं तु रामादन्यस्य गात्रं न स्पृशामि । परं च । त्वया सममागतायां मयि, नूनं रामस्य शङ्का स्यात् ।

सर्वत्र ये प्रतीताः शिष्याः सुहृदोऽथ बान्धवा भृत्याः ।
सुपरीक्षितास्त एते भवन्ति दारेष्वविश्वस्ताः ॥ ४१ ॥

अन्यच्च । शक्तैवाहं तपसा सर्वं रक्षःकुलं भस्मसात्कर्तुम् । तथा सति का नाम रघुवीरस्य प्रशस्तिः स्यात् । तेन हि हनूमन्,

संग्रामाद्रिमतशिरोभिरास्वृतान्मां
काकुत्स्थो हरतु जयश्रियोपगूढः ।
दंष्ट्रायां निहितकराग्रमप्रमथ्नन्
हर्यक्षो विरमति नो [illegible]

यथा स एव स्वपौरुषानुरूपेण विधिना मां प्रत्याहरेत्, तथोपपादय।

**हनूमा**—(सप्रश्रयम् ।) शिरसा परिगृहीतं देव्याः शासनम् । श्रोष्यति स प्रभुरिदं सर्वं, करिष्यति चाज्ञसैव यथोक्तम् । ननु देवि,

अलोलुप्त्वं भोगे परुषवचनैरक्षुभितता
क्षमा सत्यां शक्तौ स्वपतियशसे क्लेशसहनम् ।
व्रतस्थेमा कृच्छ्रेऽप्यनुपहतता क्षत्त्रमहस-
स्तवैवेदं कृत्स्नं रघुतिलकजाये सुसदृशम् ॥ ४३ ॥

मया तु भवत्याः क्लेशमसहिष्णुना केवलमिदमुदीरितम् । तत्क्षम्यताम्, (इति पादयोः पतति ।)

**सीता**—(ससान्त्वम् ।) ननु भोः, सदृशमेवेदमुद्रिक्तायाः स्वामिभक्तेः

**हनूमान्**—(उत्थाय) देवि, त्वरयति मां राघवदर्शनोत्कण्ठा, तद्दीयतां किमप्यभिज्ञानम् ।

**सीता**—(क्षणं निध्याय ।) ननु हनूमन्, इदमभिज्ञानम् । उच्यतां मद्वचनेन स रघुवीरः । यथा—भोः द्विपंतप,

क्षमे यदभिभावुके यदपि कृच्छ्रगे स्वे जने
विधेहि तदनुस्मरन् करटनिग्रहानुग्रहौ ।
स्मृतो यदि मनःशिलातिलकचाटुकारः कथं :
न चिन्तयसि नाथ मे तदवलम्बितं जीवितम् ॥ ४४ ॥

**हनूमान्**—(सश्लाघम् ।) देवि, न केवलमिदमभिज्ञानं, किंतु कर्तव्यविज्ञापनं च ।

**सीता**—(पुनर्निध्याय ।) इदमपरमभिज्ञानम् ।(इति चूडामणिमवमुच्य।) अथ वा इदं मास्तु । (सबाष्पम् ।) अस्य दर्शने ह्यत्यारूढा स्यादुत्कण्ठा । तथा हि

मनोऽभिरामे नवसंगमोत्सवे मणिर्निबद्धोऽयमनेन तं महम्।
स्मरन् सुखस्थो मुहुरुत्सुकायते स किं पुनस्तात दशामिमां गतः॥

अथ वा ।

उत्काण्ठितोऽमुनासौ मामधिगन्तुं कृतत्वरो भवति।
अग्राम्योऽयं पन्था यदर्थविज्ञप्तिरनिगद्य ॥ ४६ ॥

तस्माद्गृहाण (इति मणिं प्रयच्छति ।)

**हनूमान्**—(सप्रणामं गृहीत्वा ।) देवि, प्रस्थितोऽस्मि ।

**सीता**—(सबाष्पम् ।) तथास्तु । अनेन रक्षसा इतः परं मासद्वयावधिकोऽत्र जीवितकालो विहितः ।

**हनूमान्**—श्रुतमेतत् ।

**सीता**—ततः परं मया

वैवस्वतस्य नियतं स्थातव्यं जीवितेश्वरस्याङ्के ।

**हनूमान्**—देवि, तथैव ।

**सीता**— (सबाष्पम् ।)

स किमन्तकोऽङ्क

**हनूमान्**— (ससंभ्रमम् ।)

न हि न हि पौलस्त्यस्यान्तको देवः ॥

**सीता**—हनूमन्, तथोपपादयंस्त्वं मम जीवातुर्भव

**हनूमान्**—देवि, श्रूयतां यन्मयोपपाद्यते ।

मन्थित्वा बाहुमन्थक्षुभितमखिलं नाम विश्राव्य चोच्चै-
स्तौ चानीयेह वीरौ गिरितरुनखराद्यायुधैः कीशयोधैः।
आस्कन्द्यास्कन्द्य लङ्कां भुवि लुठदबलामात्रशेषामशेषां
धृत्वा वामंसलेंऽसे जयरवमुखरो यामि मध्यामयोध्याम् ॥

**सीता**—(सकौतुकम्।) सिद्ध्यन्तु ते समीहितानि।

**हनूमान्**—देवि, एष साधयामि। (इति निष्क्रान्तः।)

(निष्क्रान्ताः सर्वे।)

इति श्रीलक्ष्मणसूरिप्रणीते पौलस्त्यवधनाटके
चतुर्थोऽङ्कः।

## पञ्चमोऽङ्कः ।

---

(तत प्रविशति शुको नाम राक्षसः ।)

**शुकः**— (समन्तादवलोक्य । सहर्षम् ।)

कोशोत्सृष्टकृशानुविद्रुतपतत्सौवर्णहर्म्योच्चया
वृत्तेऽङ्गारमयेऽखिलेऽजनि मषीलिप्तेव या विप्रिया ।
सैवेयं नगरी तनोति नयनानन्दं श्रिया भव्यया
शिल्पेष्वन्यपितामहो विजयते सङ्कल्पसिद्धिर्मयः ॥ १ ॥

(विचिन्त्य, सनिर्वेदम् ।) अथ वा किमनेन पुनर्निर्मितेनानिर्मितेन वा नगरेण, यतेन वानरेण क्षपितेषु किंकरादिष्वक्षकुमारान्तेषु न कोऽपि पुनरुत्थापितो दृश्यते । (सानुस्मरणं सबाष्पं च ।) अहो कालस्य वैपरीत्यम् ।

अश्वैरश्वकुलं गजैर्गजघटां पत्तींस्तथा पत्तिभि-
स्तैस्तैरेव निपात्य नैर्ऋतबलं खेलादुदग्रौजसा ।
स्वान्तेनापि दुरासदा सुरवरैः शाखामृगेणाधुना
शाखेवाकुलिता न भञ्जतितरामाकम्पमेषा पुरी ॥ २ ॥

एवं च न खलु विधेः साध्यमसाध्यं वा किमपि । इच्छन् हि स कृत्स्नमेव साध्यं करोति, विपर्यये विपरीतं च ।

वृद्धौ यस्यात्कारणं तत्क्षये तु
प्रत्यासन्ने तस्य तत्साधनं स्यात् ।
यैरारूढः सप्तिभिः खं विवस्वां-
स्तैरेवास्तं नीयतेऽन्यत्र काले ॥ ३ ॥

तदेवं पूर्वमस्माकमुच्छ्रायहेतुर्यद्दैवं, तदिदानीं प्रध्वंसाय प्रवृत्तमिति

नास्त्यत्र संदेहः। (विचिन्त्य । सोद्वेगम् ।) एवमेकस्य मर्कटस्य चेष्टिते स्थिते, परःसहस्राणां तेषामाक्रान्तौ न जाने का कथा भविष्यतीति ( स्मृतिमभिनीय । ससंभ्रमम् ।) अश्रौषं च तेन वानरबलेन सहाभिषेणयन् रामः समुद्रस्योत्तरे तीरे कृतसंनिवेश इति, तद्बलजिज्ञासया सारणो गत इति च । तदेनमन्विष्यामि । ( परिक्रामति ।)

(ततः प्रविशति सारणः ।)

**सारणः**—( सहर्षमञ्जलिं बद्ध्वा ।)

दुर्दान्तलोकदमनोद्धुरचण्डबाहु-
शुष्मप्रसूतपरमाद्भुतपुण्यकीर्ते
द्वेष्ये जनेऽपि विनते स्वजनप्रसाद-
कारिन् रघूत्तम कृपाजलधे नमस्ते ॥ ४ ॥

अपि च ।

दृष्टाम्बुधेः क्षुभितता कुलभूभृतां च
स्थैर्यच्युतिस्तदुभयं च न तेऽद्य दृष्टम् ।
अत्युन्नतस्थिरगभीरविशालभाव
जीयाः श्रिया रघुपते शरदः सहस्रम् ॥ ५ ॥

( इति परिक्रामति ।)

**शुकः**—(विलोक्य । सकौतुकम् ।) अये इत एवागच्छति सारणः । तदेनमुपसर्पामि । (उपसृत्य) सखे, दिष्ट्या शत्रुकटकान्निरुपप्लवः प्रत्यागतोऽसि ।

**सारणः**—( अनालोकितकेन ।) अहो अद्भुतमद्भुतम् ।

**शुकः**—( तमालिङ्ग्य । सोत्प्रासम् ।) सखे, किमद्भुतम् । किमलाबूवदश्मानः सागरे प्लवन्ते, किं दारुवद्वारिण्यप्यग्निः समिध्यते, उत स्थलवज्जलेऽपि जनः पद्भ्यां चङ्क्रम्यते, यदेवं विस्मितोऽसि ।

**सारणः**—कथं वयस्यः शुकः (सगर्वम् ।) सखे, यदिदमसंभावितं मन्यसे, तत्त्रितयमपि रामसंनिधौ संभावितमासीत् ।

**शुकः**—(सकौतुकम् ।) कथं संभावितमासीत् । तेन हि श्रोतुमिच्छामि ।

**सारणः**—सखे, श्रूयतां । परबलं पारावारस्योत्तरे तीरे संनिविष्टमाकर्ण्य तज्जिज्ञासमानेन महाराजेन नियुक्तोऽहं तत्र प्रवेशसौकर्याय वानररूपं कृत्वा प्रविष्टोऽस्मि ।

**शुकः**—ततस्ततः ।

**सारणः**—तत्र प्रविष्टमात्रोऽहं निर्ज्ञातमायैस्तद्भटैः संयम्य नीयमानो यावत्पश्यामि,

तावत्सत्वरमुक्तदर्भशयने विस्फार्य रामे धनु-
नों साम स्थितमितेषु साधनमिति क्रोधादिषुं मुञ्चति ।
शस्त्राग्निक्वथिताम्बुबुद्बुदगुहानिष्ठ्यूतयादोगणो
जज्ञे शुष्कसरिन्मुखो निधिरपामस्तोर्मिरस्तोन्मुखः ॥ ६ ॥

**शुकः**—अहो उदग्रमस्य चरितम्, कोऽर्थो मुक्तदर्भशयन इति ।

**सारणः**—प्रथमं तेन सागरप्रसादाय व्रतिना त्रिरात्रं दर्भशयने स्थितम् ।

**शुकः**—तस्मिन्नप्रसन्ने स्वयमप्यप्रसन्नो बभूव । ततस्ततः ।

**सारणः**—ततश्च

क्रोधं संहर मास्तु मास्तु जगतां क्षोभो द्वितीयं शरं
मा संधा मयि शिक्षिते प्रणमतां रक्षाव्रतिन् राघव ।
इत्युच्चैर्मुखरः समं मणिगणैर्जाततत्वरः स्वं शिरो
नीचैरस्य पदाब्जयोरनमयत्प्रोद्भूय यादःपतिः ॥ ७ ॥

**शुकः**—(सात्सुक्यम् ।) किं प्रतिपन्नं तेन रक्षाव्रतिना ।

सारणः—[illegible] तेन प्रत्युक्तम्

"परोपकारे नो सक्तं मनागपि मनो मम।

सह मार्गनिरोधेन मार्गणो विरमत्वयम् ॥ ८ ॥" इति।

शुकः—अहो उदात्तमुक्तम्। ततस्ततः।

सारणः—ततस्तस्मिन् सेतुबन्धनेन मार्गं तदर्थं जले प्रक्षिप्यमाणानां प्लवनधर्मतां समादिश्य तिरोहिते सपरिवारे मकरवाहने, रामस्य भ्रुकुट्या सह प्रचलितेषु सैन्येषु,

उत्पाट्यैकैकमेककः कपिभटः शैलं तरुं वा जले

यावत्प्रास्यति तावदेव जलधौ सेतुर्महानुद्बभौ।

न ह्येकोऽप्यकृती न चाप्यधिककृतो वावशेषा क्रिया

निष्पन्ना सममेव कर्तृकरणव्यापारपारीणता ॥ ९ ॥

शुकः—(सपुलकोद्भेदम्।) सत्यमाह भवानद्भुतमिति। क्वेदानीं स सेतुकर्ता।

सारणः—नन्वस्मिन् सुवेलगिरिशिखरे कृतस्कन्धावार आस्ते।

शुकः—अथ कथं तव मोक्षः।

सारणः—तत्र व्यूढेषु सैन्येषु युवराजं वालिपुत्रमङ्गदं महाराजरावणाशयज्ञानाय प्रस्थापयन् रामस्तदन्तरे भटैः प्रदर्शितं भयकातरं च मामाश्वास्य कृत्स्नं तद्बलं भटैर्मे दर्शयामास।

शुकः—अहो प्रागल्भ्यम्। ततस्ततः।

सारणः—ततः पादयोः प्रणते मयि भद्र, उच्यतां मद्वचनात्ते राजा। यथा—

अधिगतोऽसि मलिम्लुच मे चिरादयि जघन्यमते किमु ते मतम्।

तव पतन्तु शिरांस्ययमुत्सवे चरणयोर्युत वा रणसीमानि॥ १०॥

इति वाचिकं संदिश्य मां विसृष्टवान्। अत्र को वृत्तान्तः।

(नेपथ्ये।)

भो भोः सभास्तारा:,

भर्तुर्ये नृत्तगीताद्युपचरणपरा ये च नर्मप्रधाना
ये चित्रालापशौण्डाः परिषदि कथकाः सन्ति ये ये च सूताः।
ते सर्वे यान्तु दूरात्समुपकरणैर्ये च सामान्यलाक्षाः
कर्तव्यं गुप्तमन्त्रं सह सचिववरैर्मन्यते चक्रवर्ती ॥ ११ ॥

(चूलिका ।)

**शुकसारणौ** — (आकर्ण्य । ससंभ्रमम् ।) कथमुपक्रान्तमन्त्रो राजा । स्थाने खल्वेतत् । तदावामपि तत्रैव गत्वा यथोचितमाचरावः ।

(इति निष्क्रान्तौ ।) **( विष्कम्भः ।)**

(ततः प्रविशति सचिवैः सममासनस्थो रावणः ।)

**रावणः**—(सचिन्तमात्मगतम् ।)

रतिं धत्ते सीता हृदि मम हृदा वापि न तु सा
तृणादल्पः शत्रुस्तृणयति स कारस्न्येन महितान् ।
प्रसृप्तं यत्तेजस्तदपि शनकैः संकुचति मे
नियन्तारं किं मां नियमयितुमिष्टेऽद्य नियतिः ॥ १२ ॥

(विचिन्त्य । साक्षेपम् ।) पङ्गुर्हि कुल्यया कुण्ठितप्रसरो भवति, न जङ्घालः । तत्कापुरुषैकभीषणां नियतिं पुरुषकारेण समुल्लङ्घयामि । (प्रकाशम् ।) ननु सचिवाः, विदितमेवेदं यत्किल—भगिन्यां शूर्पणखायां धृष्टमाचरितवतस्तस्य नराभकस्य प्रतिकर्तुकामैरस्माभिस्तद्दारा आहृता इति, वानरोऽयमित्यवज्ञाततया स्वजातिसुलभं किमपि चेष्टित्वावप्लुतो हनूमानिति च । संप्रति कपिकुलानुप्लवः सोऽस्माकमरातिः सिन्धोरुत्तरतीर्ण [illegible] ।

**महापार्श्वः**—महाराज, सेतुना सागरमुत्तीर्य सुवेलगिरेर्मूर्धानमाधितिष्ठति स नरः ।

**रावणः**—(ससंभ्रमम् ।) अपि सत्यमेतत् ।

**महापार्श्वः**—कथं महाराजेऽनृतमाविद्यते, विशेषतोऽधुना ।

**रावणः**—(सोद्वेगमात्मगतम् ।) तर्हि मम मूर्धानमाक्रम्येति वक्तुं शक्यम् (सावहित्थं प्रकाशम् ।) तदविलम्बेन मन्त्रः क्रियताम् ।

**महोदरः**—ननु महाराज, कथमात्मनः प्रतापं विस्मृतवानि-वावभासि ।

**स्मृत्वा ते बाहुकेलिं न हि धृतिमधुनाप्येति कैलासशैलो**
**भग्ना वक्षस्तटे ते विजहति विकृतिं नैव दिग्दन्तिदन्ताः ।**
**दिक्पालास्तेऽन्तपालाः कृ[illegible] स भवान्मन्त्रकृन्मर्त्यहेतो-**
**रेणे दृष्टे जिघत्साप्र[illegible]नरभसात्को विमर्शस्तरक्षोः ॥१३॥**

**रावणः**—(सस्मितम् ।) सखे, अस्त्येव हस्तगतस्तुरीयोपायः । अयं तु लोकन्यायः । यथा—

**क्षुद्रतरोऽपि विपक्षो बुभूषुणा नावमन्तव्यः ।**
**महतोऽपि तूलभारान् कणमात्रोऽग्निर्दहत्येव ॥ १४ ॥**

अतः प्रवर्ततां मन्त्रः किमुपायान्तरस्याप्यवकाशोऽस्ति न वेति ।

**प्रहस्तः**—महाराज, अस्ति साम्नोऽवकाशः । "अयि राम,

**तपस्तप्तासि त्वं वद किमनया ते वनितया**
**पराक्रान्ता चेयं किमिति पुनरस्यां तव रतिः ।**
**नरोऽसि त्वं जात्या वयमपि नराशाः कथमहः**
**पुरो धावेदाखुर्न च न सुलभान्या भुवि वधूः ॥ १५ ॥**

तद्भद्र, गम्यताम् । किमनेन ते निष्फलेन व्यापारेण" इति वाग्मिना पुरुषेण सान्त्व्यमानोऽसौ मनीषितया तथेति परावर्ततैव ।

**महापार्श्वः**—ननु भोः, अकारणमेतत् । यन्महता परिकर-बन्धेन पारेसागरमभियुञ्जानः शत्रुः किमनेन शुष्केण साम्ना निवर्तेत ।

**रावणः**—न खलु सीताप्रदानं कथमपि सङ्गच्छते ।

हठात्स्वसृविमाननं प्रहरणं मुहुः स्वे जने
पुरे ज्वलनदापनं जलधिदुर्गसंदूषणम्।
सहेय तदिदं कथं निकृतमप्रतीकारतो
वरं निधनमद्य मे परिभवेण नैव स्थितिः ॥ १९ ॥

**महापार्श्वः**—महाराज, सन्त्येवान्यान्यपि प्रदेयवस्तूनि। तदेवं संदेष्टव्यः स तपस्वी। "अयि दाशरथे,
दद्यामद्य किमङ्ग ते पितृधनं हृत्वा सपत्नीसुतं
कृत्स्ना वा वसुधा तवास्तु वशगा सामन्तवृन्दैः समम्।
आहोस्वित्त्रिदशा दिवस्पतिमुखास्तिष्ठन्तु ते शासने
का वा त्वां ललना वृणीष्व भजतामेकां विना जानकीम्॥
एष्वन्यतमस्य प्रदानेन निवर्तयितुं शक्यत एव।

**महोदरः**—नन्वेतदप्यसाधनम्। यतः
एकत्र भुवनमखिलं परत्र सीतेति तुलितमुभयं चेत्।

**रावणः**—(सकौतुकम्।)
अंशांशतोऽपि सीतामितरन्नैवालमनुकर्तुम् ॥ १८ ॥
अत एव तत्संग्रहेऽस्माकं महान् यत्नः।

**महोदरः**—तेन हि भेदमेकं वर्जयित्वा नास्ति गत्यन्तरम्।

**महापार्श्वः**—नास्ति तस्याप्यन्तरम्। तथाहि—परबले लक्ष्मणः सुग्रीवश्चेति द्वावेव रामादनन्तरौ प्रधानवीरौ। तत्र स्वयमेव ज्येष्ठमुपासीने लक्ष्मणे रामप्रसादासादितैश्वर्ये सुग्रीवे वा कथं भेदः प्रसरतु। न चान्यं पश्यामः। तत्कीदृशी ते वाचोयुक्तिः।

**महोदरः**—(विहस्य।) सखे कथमेवं मन्यसे। साधारणी खलु सर्वत्र च राजकुले सुहृच्छद्मनः प्रच्छन्नशत्रोर्वृत्तिः। स च
निभृतमुपहितोऽन्तर्दारुणीवारिपक्षे
बहिरकलितसंस्थस्तन्मयश्छिद्रकाङ्क्षी।

परपरिभवकाले प्रज्वलन्नन्तरा द्रा-
ग्दहति दहनकल्पः स्वाश्रयं गूढशत्रुः ॥ १९ ॥

एतदेवाहिभयमित्यभिधीयते ।

**रावणः**—(स्वगतम् ।) अनया किल वचनभङ्ग्या कोऽप्यस्मत्पक्षेऽपि छिद्रान्वेषी तिष्ठतीति गम्यते । को न्वयं स्यात् । अथवा क्रमेण स्पष्टीभविष्यति

(नेपथ्ये ।)

शास्त्रे भूरिकृतश्रमः कुशलधीर्निर्बाधबोधोदयो
द्वैधे तत्त्वमनाकुलं कलयितुं दक्षोऽरिषड्वर्गजित् ।
लोकान् जेतुमिवोद्यतः स्वतपसा भर्तुर्हितैषी सदा
श्रीमानेष विभीषणः परिषदं मातामहेनाञ्चति ॥ २० ॥

(ततः प्रविशति माल्यवन्तं पुरस्कृत्य विभीषणः ।)

**विभीषणः**—मातामह मातामह,

अधर्मो नो धर्मं जयति परदाराभिगमना-
द्दधं नान्यद्राजा व्यसनपतितो द्वारि च रिपुः ।
त्रिधिर्वामः पात्यं बहु कुलममात्याश्च कुधियो
बलात्तद्रक्षायां त्वयि मयि च धूरद्य निहिता ॥ २१ ॥

तदेह्येहि राजानं प्रतिबोधयितुम् । (इति प्रविश्यासनपरिग्रहं करोति ।)

**महापार्श्वः**—सखे महोदर, तेन हि ज्ञातुमिच्छामि ते बुद्धि-कौशलम्

**महोदरः**—ननु वाली रामसुग्रीवाभ्यां हत इत्येतदास्ताम्, अनन्तरमपि तद्राज्यं सुग्रीव किल लेभे, न तु तत्पुत्रोऽङ्गदः ।

**महापार्श्वः**—यौवराज्येऽभिषिक्तो ह्येषोऽपि ।

**महोदरः**—(सोपहासम् ।) भद्र, बहु कृतम् ।

कृत्वा विप्रियमतुलं हृत्वा सर्वस्वमपि परस्य हठात् ।
भिक्षां ददाति तस्मै लोकं प्रत्याययन्मायी ॥ २२ ॥

तस्माद्राज्यार्हस्य तस्य किमनेन भिक्षोपमेन यौवराज्येन । स च शोकामर्षाभ्यामन्तर्दह्यमानोऽपि प्रत्यवस्थानाय समाश्रयाकाङ्क्षी तावदेव तावुपास्ते ।

**रावणः**—एवं तर्हि सज्जा वयं सर्वात्मनाङ्गदस्य साह्यं कर्तुम् ।

निकर्तव्योऽस्माकं रघुशिशुरमुष्य प्लवगराड्
द्वयोश्च द्रोहार्थं मिथ उपकृतौ द्वावपि रिपू ।
विधायान्तश्छिद्रं तदहमुनोन्मथ्य च परान्
कृतार्थः स्यां पश्चात्प्रथममभिषिच्य स्वसुहृदम् ॥ २३ ॥

तत्प्रस्थाप्यतां कोऽपि समर्थः प्रणिधिरङ्गदानयनाय ।

(नेपथ्ये ।)

किमु पविरुत किंकरो नु मृत्योः
प्रलयसखः किमु धूमकेतुरुग्रः ।
इति चकितमुदीक्षितो जनौघैः
प्रविशति कोऽपि कपिर्निभो विभिन्दन् ॥ २४ ॥

(प्रविश्य ।)

**अङ्गदः**—एषोऽस्म्यैन्द्रिसूनुरङ्गदो नाम रामदूतः ।

**रावणः**—(सौत्सुक्यम् ।) भद्र, किं वालिपुत्रस्त्वम् । दिष्ट्या अन्विष्यमाण ओषधिविशेषः स्वयमेव हस्तगत इति महदिदं कौतुकस्थानम् । अङ्ग, क्रियतामासनपरिग्रहः ।

**अङ्गदः**—(उपविश्य, स्वगतम् ।) किमस्य मदन्वेषणे प्रयोजनम् । किमयममानुषैरस्मत्प्रभोर्विक्रमैरुद्विग्नो देवीप्रत्यर्पणाय द्वारमन्विष्यति । उतास्मद्बले किमपि च्छिद्रं कर्तुम् । भवतु, जानामि (प्रकाशम् ।) भोः, अप्यस्ति मदन्वेषणे किमपि प्रयोजनम् ।

**रावणः**—भद्र, किमेवमुच्यते । नन्वस्ति महानर्थः ।

**अङ्गदः**—(स्वगतम् ।) किं महान् अर्थः, उतानर्थः, संदिग्धं वचनम्। (प्रकाशम् ।) स कीदृशः !

**रावणः**—भद्र, परेण बलादपह्रियमाणे स्वामिषे का प्रतिपत्तिः पतत्त्रिणः ।

**अङ्गदः**—(स्वगतम् ।) नूनमनेन शठेन शाठ्यमेवोपक्षिप्यते । तेनैव तं प्रतिक्षिपामि । अग्रेऽपि चास्यानुजस्य विभीषणस्य सर्वथानभिमतोऽयं दुर्व्यापार इति । यदि तस्मिन् फलति कामं फलतु । तदेवं व्याहरामि । (प्रकाशम्) । भो राक्षसराज, न केवलं पत्रिणामेवायं न्यायः, अपि तु सामान्योऽयं सर्वस्य लोकस्य । परेणापहृते स्वार्थे बली स्वयमेव तं निगृह्य प्रत्याहरति, अन्यथापि बलीयसा तत्प्रतिपक्षेण सह संनिपत्य स्वकार्यं साधयति ।

**रावणः**—(सकौतुकम् ।) भद्र, सम्यक् पश्यसि। संप्राप्तो हि तस्य न्यायस्यावतारस्त्वयि ।

**अङ्गदः**—कथमिव ।

**रावणः**—ननु तव पितरं निहत्य त्वद्राज्यहर्तारौ रामसुग्रीवावुभावपि साक्षाद्वा बलीयसः प्रतिपक्षस्य व्यपाश्रयेण वा अवश्यं निग्राह्यौ किल ते ।

**अङ्गदः**—(स्वगतम् ।) व्यक्तमिदानीमन्वेषणप्रयोजनम् । (प्रकाशम् ।) सत्यमुभावपि तौ वालिहन्तारौ । तथापि स्वजनस्यापराधमपह्नोतुं, परत्र मिथ्या तमारोपयितुं च नोत्सहन्ते हि महानुभावाः । अतो निर्दोषस्य पितृव्यस्य निग्रहाय कथं प्रयतेमहि । यच्च रामव्यपाश्रयेण स्वाग्रजमवधीदेष:, तदपि सांप्रतमेव । पश्य ।

भ्राता ज्येष्ठः किल पितृसमः पुत्रतुल्यः कनिष्ठ-
स्तावन्योऽन्यं प्रणयभरितौ माननीयौ तथैव ।

निर्मर्यादे स्पृशति चरिते कः पिता कश्च पुत्रो
द्रोहः साक्षादथ च बलिना भ्रातिधर्मो हि दृष्टः ॥ २८ ॥

एवं निर्दयमग्रजेन विद्रावितं स्वपादमूलं शरणं प्रपन्नं वनौकसं कृपया रक्षन्मानवेन्द्रो वा कथमपराद्धोऽस्तु । अस्तु वा स सापराधः, तथापि त्रैलोक्यैकवीरं तं रघुवीरं को वा प्रत्यवस्थातुमीष्टे ।

**रावणः**—भद्र, मा भैषीः । एषोऽस्मि तस्य निग्राहकः ।

**अङ्गदः**—नूनं निग्रहीष्यसि । कुतस्ते मय्येषा श्रद्धा ।

**रावणः**—भद्र, त्वं मम सख्युः पुत्रः खल्वसि ।

**अङ्गदः**—अतस्त्वं मम कृते रामसुग्रीवौ निगृह्य कपिराज्यं मे प्रदातुं मामन्विष्यसि ।

**रावणः**—वत्स, तथैव ।

**अङ्गदः**—(सोपहासम् ।) अद्य भवता सनाथोऽहमस्मि । ननु भोः, तदानीं कुत्र गता तवेयं शक्तिः,यद्रामलक्ष्मणौ वञ्चयित्वा चौर्येण देवीमाहृतवानसि। अतस्तत्तिष्ठतु। यत्तु ब्रूषे मम पितुः सखायमात्मानं, तत्रापि किंचिद्वक्तव्यमस्ति । पुरा मम पितरमभियुञ्जानस्त्वम्

पुच्छावेष्टनकुण्डलीकृततनुर्व्याकृष्यमाणः स्तवै-
र्घण्टाविभ्रममाचरन्नासि सखा वालस्य नो वालिनः ।

**रावणः**—(सक्रोधम् ।) किमात्थ रे दुर्मुख, किमात्थ वलीमुख, एष न भविष्यसि । क्व मे चन्द्रहासः ।

**महोदरः**—महाराज, दूतशब्दसंगुप्तेऽस्मिन्मर्कटकीटे किं क्रोधोत्सर्गेण ( अङ्गदं प्रति ।) अयि वानर, शीघ्रं ते स्वामिनः संदेशमावेद्य पलायस्व ।

**अङ्गदः**—

बुद्ध्वा तस्य वधं शरेण जलधेः शिक्षां च रक्षां तथा
रामं सान्त्वय तद्वधूमुपहरन्नग्रस्य सर्वार्थदम् ॥ २९ ॥

**विभीषणः**—(जनान्तिकम् ।) मातामह, यदस्माभिरुपदेष्टव्यम्, तत्सुग्रीवेण संदिश्यते ।

**महोदरः**—रे वानर, शृणु प्रतिसंदेशं ते स्वामिनः " रे राम,

दातुं भूमिसुतां क एष जनकः कस्त्वं ग्रहीतुं च तां
त्रैलोक्यस्थनिधाननायकतया लङ्केश्वरे जाग्रति ।
वस्तुं नालमियं शिरीषकुसुमश्लक्ष्णैर्वनेष्वङ्कै-
र्मा मा धा अनरण्यवर्त्मनि पदं यद्यस्त्यरण्ये स्पृहा ॥ १७ ॥

**अङ्गदः**—अयि रावण, वालिप्रियस्य मे पितुर्वालिसखोऽसीति कृत्वा त्वयि स्निह्यति मे चेतः । अतस्तावदेव दीयतां सीता । यतः

मा लुम्पन्तु हरीश्वरास्तव पुरीमारुध्य धीरोद्धता
मा विन्दन्तु च संघशः पितृपतिं ते पुत्रपौत्रादयः ।
मा दुष्यन्तु मुखानि ते मृगदृशामस्रैरजस्रोदयै-
र्मा हृष्यन्तु च तेऽङ्गखादनरसस्फारारवाः फेरवाः ॥ १८ ॥

**इन्द्रजित्**—रे रे दुरात्मन् मर्कटकीट, कथं शक्रजेतारं मामविगणय्य स्वैरं प्रलपसि । तिष्ठ तिष्ठ । तव पितामहं वासवमिव त्वामप्यधुना दमयामि । (इति खड्गपाणिरुत्तिष्ठति ।)

**अङ्गदः**—( सपुच्छास्फोटमुत्प्लुत्य ।) अयि चिरंतनवैरिन्, दिष्ट्या प्राप्तोऽसि

त्वया मम पितामहो युधि जितोऽस्तु पित्रा तु मे
स्मर स्वपितरं चिरं विनिगडितं च कारागृहे ।
तथा त्वयि च दुर्मते नियमिते मया दुर्मदे
समं श्रयतु नो यशो धनमिवाधुना पैतृकम् ॥ १९ ॥

( इति तत्किरीटमाच्छिद्य गतः । )

**सचिवाः**—अहो स्वजात्यनुरूपं मर्कटचेष्टितम् ।

**माल्यवान्**—तात लङ्केश्वर, न मे रोचते किमप्येतत् ।

**रावणः**—मातामह, किं तत् ।

**माल्यवान्**—वत्स, किमर्थमिदमनर्थसंपादनम् । पश्य

हरन् परवधूं सतीं कपिकुलैः पुरं हारयन्
विरुध्य च बलीयसा भवसि हन्त चिन्ताकुलः ।
जये तव कियत्फलं सकलसंक्षयो व्यत्यये
जहीहि कुलघातिनीं जनकजाख्यकालोरगीम् ॥ ३० ॥

**रावणः**—(विहस्य ।) इदमेव जराप्रलपितं नाम, यद्भक्ष्यभूतस्य नरस्य बलित्वेन सञ्जाशितम् ।

**विभीषणः**—आर्य, दीर्घदर्शिनं मातामहं क्षेप्तुं नार्हसि । बहुविधलोकानुभववन्तः कालोचितप्रतिभासंपन्नाः खलु प्रवयसः । अत एव वृद्धवचनं सिद्धौषधमिव संगृह्यते भावुकैः । तस्मादनवज्ञया श्रोतु-मर्हसि तथ्यं पथ्यं चास्य वचनम् ।

**रावणः**—अस्तु । मातामह, कथ्यतां शेषमपि ।

**माल्यवान्**—वत्स लङ्केश्वर, तपःप्रीणितात्पितामहादमानुषेभ्यः किलावध्यत्वमवृणीथाः ।

**रावणः**—मातामह, बाढम् । मनुष्यभिन्नेभ्योऽभयं वृतवानस्मि । कोऽत्रापह्नवः । किमुरभ्रात्त्राणमीप्सति शार्दूलः ।

**माल्यवान्**—तेन हि मुह्यति मे मतिः ।

**रावणः**—स्थाने खलु तवातिजीर्णस्य मतिव्यामोहः ।

**माल्यवान्**—अयि वत्स, किमेवमसंप्रतिपन्नं व्याहरसि । तदार्जवेन श्रूयताम् । रामस्य मानुषत्वममानुषवीर्यवत्त्वं च, तथा तव मानुषभिन्नेभ्योऽवध्यत्ववरं च पुनःपुनर्विमृश्य व्याकुलोऽस्मि ।

**रावणः**—मातामह, कीदृशममानुषकृत्यं रामे दृष्ट्वा व्याकुलोऽसि ।

**माल्यवान्**—वत्स, किं न जानासि । अमुना हि

भग्नं शरासनमभूत्पुरशासनस्य
भग्नश्च हैहयरिपुर्निहताः खराद्याः ।
चक्रे महेन्द्रतनयोऽपि कथावशेषः
सेतुच्छलेन गमिता गिरयः प्लवत्वम् ॥ ११ ॥

रावणः—(विहस्य ।) मातामह, एतत्तस्यामानुषकृत्यम् । पश्य

जीर्णं धनुर्भृगुसुतश्चिरमुक्तयोग्यो
व्यामोहिता खरचमूः कपिरन्यसक्तः ।
सेतुर्नलस्य तु वरेण नराभकेऽस्मि-
न्नारोप्यते बत मुधैव महत्त्वमज्ञैः ॥ १२ ॥

विभीषणः—(ससंभ्रममुत्थाय, रावणस्य पादौ गृहीत्वा ।)
आर्य प्रसीद

रावणः—वद काङ्क्षितमद्य किं ते

विभीषणः—
सीता जहीहि

रावणः— अपकृतं भवतेऽनया किम् ?

विभीषणः—
नैकस्य मेऽपि तु कुलस्य च सापकर्त्री

रावणः—
सर्वं गृहाण वसु मा निवद प्रियां मे ॥ १३ ॥

(नेपथ्ये ।)

भो भो वानरवीराः, सर्वसेनाध्यक्षो नीलः शास्ति । यथा—
रुन्द्ध द्वाराणि वप्रान् क्षपयत परिखाः क्रामताक्रामतान्त-
श्छिन्त व्यूहान् सपालानपहत पृतनाः सर्वमास्कन्दत स्वम् ।
स्त्रीचोरस्यावरोधे विहरत विविधैर्विप्रकारैरभीका
गृह्णीतारिं सपुत्रं रघुपरिवृढयोस्तौ हि वध्यौ परे नः ॥ १४ ॥

इन्द्रजित्—(ससंभ्रमम् ।) भद्र सेनापते,

द्वारे द्वारे कवाटान्यतिदृढघटनान्यर्गलाभिः क्रियन्तां
गुल्मे गुल्मे च हेतिक्षणरुचिखचितैः स्थीयतां योधवर्गैः
स्थाने स्थाने शतघ्न्यः प्रसृमरभिदुरोड्डामरा व्यामियन्तां
यूथे यूथे हरीणां निशितशरमयी पात्यतां वृष्टिरुग्रा ॥२९॥

एवं शीघ्रमभियुज्यतां प्रतिबलमस्मद्बलेन, अहमप्यनुपदमागत एव।

**प्रहस्तः**—तथा (इति प्रतिष्ठते।)

**विभीषणः**—भद्र सेनापते, न गन्तव्यम्। क्षणं स्थीयताम्। (रावणं प्रति) आर्य, (इत्यर्धोक्ते।)

**इन्द्रजित्**—धिङ्मूर्ख, कथमभियोगाय प्रस्थितं निवारयसि। प्रहस्त, अनुष्ठीयतामविलम्बेन ते नियोगः। (इति तं प्रस्थापयति।)

**माल्यवान्**—वत्स मेघनाद, कथं प्रतीक्ष्यं प्राज्ञतमं च ते पितृव्यं क्षिपसि।

**इन्द्रजित्**—कथं परैराक्रान्ते पुरे, तदभियोगायोत्थितं निवारयन्नयं प्राज्ञोऽस्तु। न हि मे देशकालानभिज्ञेऽसंबद्धवादिनि च गौरवम्।

**विभीषणः**—मातामह, तिष्ठत्वयमपक्वबुद्धिर्बालिशः। अवश्यं रक्षणीयो हि विनिपाताभिमुखो राजा। अतस्तमेव सान्त्वयामः। (रावणं प्रति।) आर्य,

कुलं सुविपुलं धनं धनददुर्लभं वल्लभा
गृहेषु ललनाः श्रुतं शतमखार्चितं शासनम्।
इतीदमखिलं किलोन्मथितुमीहसे मोहितः
पराञ्चय पराङ्गनां कलय मा रणं मारणम् ॥३६॥

(इति रुदन् पादयोः पतति।)

**इन्द्रजित्**—(सोपहासमुद्धतं च।) अयि पुरुषपशो, कथं व्यायामकाले परिदेवितुमारब्धोऽसि। परं च।

रे मन्त्रिसत्तम सकृत्तव मन्त्रयोगा-
द्भस्मावशेषमजनिष्ट पुरं समग्रम्।

किं तेऽवशिष्टमधुना घटसे यदर्थे
धिक्त्वामसभ्य किमपत्रपसे न जल्पन् ॥ १७ ॥

विभीषणः—अयि पुरोभागिन्, कथं मय्येव दोषमारोपयसि ।

वनं ध्वस्तं ध्वस्तं बलमपि पुरं भस्मितमिदं
तपस्यन्त्यास्तीव्रं जनकजनुषो विद्धि तपसा ।
न चेदत्रैवास्या बहिरपगमो यास्यति लयं
समग्रं लङ्कायां ध्रुवमुपरि किं वा नु भविता ॥ १८ ॥

इन्द्रजित्—(सावज्ञम् ।) शृणु रे मन्द,

मा भूत्तद्धि पहर्तुरङ्कपतनं मा भून्मदामर्शिचरं
मा भूत्तर्जनभर्त्सनादिसहनं यद्यस्ति तादृक्तपः ।
मा भूच्चास्य वलीमुखानुसरणं मा भूत्प्रियान्वेषणं
मा भूत्सागरतोषणाय नियमो मा भूच्च सेतुक्रिया ॥ १९ ॥

तदलं तव साचिव्येन, गम्यतां यथेच्छम् ।

विभीषणः—(सक्रोधम् ।) अयि दुरात्मन्, कथं राज्ञो हितैषिणा मया गन्तव्यं, अनर्थानुबन्धिना त्वया स्थातव्यम् । (रावणं प्रति ।) आर्य, प्रथमं निगृह्यतां सर्वानर्थहेतुरयं दुरात्मा ।

रावणः—(सक्रोधाट्टहासम् ।) महोदर, अद्य गृहीतः प्रच्छन्नशत्रुः सीगोष्ठीषु प्रवेष्टव्योऽयं सभायां स्थापयितव्यः, सर्वविजयी ममात्मजो निग्रहीतव्यः। खलु वा बहूक्त्वा । इदानीमेवैनं गूढशत्रुं निगृह्य, पश्चात्प्रत्यक्षशत्रुं च निगृह्णामि । (इति खड्गमादत्ते ।)

महोदरः—(ससंभ्रममुपसृत्य ।) महाराज, क्षम्यताम् ।

राज्यं हरन्तमुपरुध्य गुहां शिलाभिः
सुग्रीवमुग्रहृदयं न जघान वाली ।
त्यागं द्विषः स्वसहजस्य वधं वदन्ति
सौभ्रात्रशोभितगुणा न तु गात्रनाशम् ॥ ४० ॥

तदर्थं परिह्रियताम् ।

**रावणः**—अयि भ्रातृच्छद्मन्,

जनकतनयात्यागोद्योगो रिपोर्गुणकीर्तनं
मयि परिभवस्तेजोभङ्गः सुतस्य च गर्हणा ।
इति खलमते दोषे दोषे वधो हि तवोचित-
स्तदपि घृणया निस्त्रिंशोऽयं बलादपकृष्यते ॥ ४१ ॥

अतो गम्यतां यथेच्छमविलम्बितेन ।

**विभीषणः**—किमितः परमिह स्थितेन । (इत्युत्थाय ।) ननु आर्य,

गूढं प्रकाशमपि वा न तवास्मि शत्रु-
राप्तस्तव प्रियकथो न तु पथ्यकाङ्क्षी ।
त्यक्तस्त्वया सकलमत्र परित्यजामि
स्वस्थो भवास्तु चरमस्तव मत्प्रणामः ॥ ४२ ॥

(इति प्रतिष्ठते ।) (पटाक्षेपेण प्रविश्य ।)

**सुग्रीवः**—भो भो विभीषण, शृणु विदितवृत्तान्तस्य गुणगृह्यस्य तत्रभवतो रघुनाथस्य संदेशम्—

"मा भैषीस्तात शत्रोरहमनुज इति प्रीणिताः स्मो गुणैस्ते
लङ्कायां त्वाभिषेक्तुं त्वरयति विजये लक्ष्मणोऽस्मिन्मुहूर्ते ।
अध्यक्षो दक्षिणस्यामसि ककुभि यथा यक्षराडुत्तरस्यां
पौलस्त्यौ यौ तु शेषौ रणभुवि तरणेर्मण्डलं तौ जिगीषू ॥"

इति । तदेहि प्रभोः प्रसादमनुभवितुम् । (इति विभीषणेन सह निष्क्रान्तः ।)

**कुम्भकर्णः**—(उत्थाय ।) आर्य,

महात्मानं वत्सं हितनिहितबुद्धिं विजहता
परित्यक्तो लोको नियतमयमद्यैव भवता ।

अहं न त्वां जह्यां न च रिपुमुपेयां कथमपि
स्थितिर्वा मृत्युर्वा जनिरिव समं नौ न तु पृथक् ॥ ४४ ॥

तद्यथायोगमभियोगः प्रवर्तताम् । अहमप्यवसरे प्रबोधनीयः। एह्येहि मातामह (इति माल्यवता सह निष्क्रान्तः ।)

**महोदरः**—देव, आवामपि प्रहस्तमनुसरावः । (इति महापार्श्वेन सह निष्क्रान्तः ।)

**रावणः**—(दीर्घं निःश्वस्य ।) वत्स, किमिदानीं कर्तव्यम् ।

**इन्द्रजित्**(—सावष्टम्भम् ।) तात, अलमावेगेन ।

नष्टस्त्वेको विमतभिदया निद्रयान्योऽनुजस्ते
नश्यन्त्वन्ये य इह पृतनानायकास्तेऽपि कामम् ।
पर्याप्तोऽहं भुवनमखिलं नागपाशैर्निबध्य
ब्रह्मास्त्राग्नौ सह तदधिपैर्होतुमातत्य मायाम् ॥ ४५ ॥

तद्गच्छामः संग्रामभुवम् । (इति रावणेन सह निष्क्रान्तः ।)

(निष्क्रान्ताः सर्वे ।)

इति श्रीलक्ष्मणसूरिप्रणीते पौलस्त्यवधनाटके

पञ्चमोऽङ्कः ।

# षष्ठोऽङ्कः ।

---

(ततः प्रविशति चेटी ।)

**चेटी**—आदिट्ठ ह्मि सामिणीए कोसलआदेईए—हञ्जे सारिए, तुमं णंदिग्गामं गदुअ रण्णो भरअस्स समअं विजाणिअ आअच्छेत्ति । (परिक्रम्यावलोक्य च ।) एसो खु भट्टारअस्स अस्समो। ( दीर्घं निःश्वस्य।)

णाहो एक्को चरइ जडिलो काणणे वण्णभक्खो
अण्णो गामे तवइ कसणो वेब्भलो माउवग्गो ।
णो गोट्ठीओ ण अ कलअलो णो महो णो विणोदो
णो उच्छाहो पसरइ वुरे हंद खुज्जोवजावे ॥ १ ॥

(द्वारमवलोक्य ।) को एत्थ वट्टइ । (क)

( प्रविश्य ।)

**दौवारिकः**—अइ सारिए, कुत्थ आअदा सि । (ख)

**चेटी**—भद्द, मह सामिणीए रण्णो समअं विण्णादुं पेसिद ह्मि (ग)

---

(क) आदिष्टास्मि स्वामिन्या कौसल्यादेव्या—हञ्जे शारिके, त्वं नन्दिग्रामं गत्वा राज्ञो भरतस्य समयं विज्ञायागच्छ इति । एष खलु भट्टारकस्याश्रमः ।

नाथ एकश्चरति जटिलः कानने वन्यभक्षः
अन्यो ग्रामे तप्यते कृत्स्नो विह्वलो मातृवर्गः ।
नो गोष्ठ्यो न च कलकलो नो महो नो विनोदो
नो उत्साहः प्रसरति पुरे हन्त कुब्जोपजापं ॥ १ ॥

कोऽत्र वर्तते। (ख) अयि शारिके, कुत्रागतासि । (ग) भद्र, मम स्वामिन्या राज्ञः समयं विज्ञातुं प्रेषितास्मि ।

**दौवारिकः**—कहं माऊणं वि समओ पेक्खिदव्वो। (ङ)

**चेटी**—सव्वहा माणणिज्जो खु राआ। ता जुत्तं एव्व एदम्। (च)

**दौवारिकः**—केण उद्देसेण राअं पेक्खिस्सदि माऊ। (च)

**चेटी**—लंगावुरट्ठिदाणं वच्छाणं पउत्तिं विण्णादुम। (छ)

**दौवारिकः**—ता साहू एसो समओ, जं दाणिं एव्व तत्त-होदो वसिट्ठादो समाहिदिट्ठीए विण्णादत्थादो आअदो सत्तुग्घो। (ञ)

**चेटी**—ता अहं तुवराए सामिणीए विण्णप्पह्मि। (झ)

**दौवारिकः**—तह अणुट्ठीअदु। (परावृत्यालोक्य ससंभ्रमम्।) कहं एत्थ एव्व साणुजो संलवंदो चिट्ठइ महाराओ। ता अहं वि से संणिहिदो हुवामि (ञ) (इति निष्क्रान्तौ।)

प्रवेशकः।

(ततः प्रविशति शत्रुघ्नेन सह भरतः।)

**भरतः**—(दीर्घमुष्णं च विनिःश्वस्य।)

**न मे किमपि दुष्कृतं मम कृतेऽग्रजोऽगाद्वनं**
**पिता च दिवमन्वगाज्जनकजार्तिमाच्छत्पराम्।**
**विधाय फलमश्नुते स्वयमुदीर्य निध्याय वा**
**न चाहमिव जन्मना वृजिनजन्म धिग्जन्म मे॥ २॥**

**शत्रुघ्नः**—आर्य, ननु सन्दिष्टोऽस्यार्येण पादुके आदाय चित्रकूट-

(ङ) कथं मातॄणामपि समयः प्रेक्षितव्यः (ङ) सर्वथा माननीयः खलु राजा। तद्युक्तमेवैतत्। (च) केनोद्देशेन राजानं प्रेक्षिष्यते माता। (छ) लङ्कापुरस्थितानां वत्सानां प्रवृत्तिं विज्ञातुम्। (ज) तत्साधुरेष समयः, यदिदानीमेव तत्रभवतो वसिष्ठात्समाधिदृष्ट्या विज्ञातार्थादागतः शत्रुघ्नः (झ) तदहं त्वरया स्वामिन्यै विज्ञापयामि। (ञ) तथानुष्ठीयताम्! कथमत्रैव सानुजः संलपंस्तिष्ठति महाराजः। तदहमप्यस्य संनिहितो भवामि।

गिरेः प्रतिनिवर्तमानस्त्वम् ‘ वत्स कैकेयीनन्दन, सर्वावस्थासु माननीयो हि गुरुजनः । अतस्तत्राप्रमत्तो भव । अन्यथा पुनः परित्यक्तसमुदाचारे त्वयि बन्धुत्वमपि व्यपदेष्टुं नोत्सहेत रामः’ इति । तथैवानुष्ठितप्रायं च भवतापि । अत आर्यसमागमसमये किमर्थमयं मातुरुपालम्भः ।

**भरतः**—(सबाष्पम् ।) वत्स, पश्य पश्य तस्य गाम्भीर्यम् ।

गरीयान् संदेशः पितुरिति परं भर्तुमवनिं
मनो दध्रे भर्ता विपरियति तस्मिंस्तु नियमे ।
समं कैकेय्युक्त्या कुतुकितमनाश्चीरमदधा-
द्गुरूणां कैङ्कर्यात्सफलमधुना मे जनुरिति ॥ ३ ॥

भोस्तात, लोकतन्त्रनिष्णातोऽपि कथमेवमुन्नतस्वभावमात्मजं परित्यक्तवानसि ।

कियदभिगुणसुतविरहक्लेशात्स्वैरोदितानृते दुःखम् ।
अथवा तरतमभावं स्त्रैणा न विदन्ति भावानाम् ॥ ४ ॥

**शत्रुघ्नः**—आर्य, मातापितरावुभावपि विवक्षित्वा किल गुरुजनस्य माननीयत्वमाह । तन्मास्तु पितृतिरस्कारः । परं च । किं न स्मरस्येतमर्थमधिकृत्यार्यस्य समाधानवचनम् । यथा—“ अयि भरत,

विपन्नश्चैकाकी रणभुवि जनन्या तव बला-
दरक्ष्यस्मत्तातश्चरितमथ यन्मूलकमिदम् ।
वरौ नार्हत्येषा किमु कथय तस्यापि नृपते-
र्ऋणान्मुक्तिद्वारं मयि निहितराज्यस्य तु कुतः ॥ ५ ॥”

**भरतः**—वत्स कथं न स्मरामि (विचिन्त्य ।) अहो अस्य अन्यादृशी गुरुजने संभावना। यतः

कामोपरुद्धात्मनि धर्मबुद्धिः
क्रूरोद्यमायामपि नीतिमार्गः ।

राज्यापहारेऽपि च पथ्यचिन्ता
रामादृतेऽन्यस्य तु कस्य वा स्यात् ॥ ६ ॥

(इति बाष्पायते ।)

**शत्रुघ्नः**—आर्य, कुलगुरुणा वसिष्ठेनापि सन्दिष्टम्—कारणोपपादितेऽस्मिन्नर्थे नोपालम्भव्या कैकयराजपुत्रीति ।

**भरतः**—(स्मृतिमभिनीय) वत्स, कथय शेषमपि गुरोः संदेशम् । न्याय्यं वदन्विभीषणो रावणेन विद्रावितः। ततः किम्।

(नेपथ्ये ।)

अस्थित्वङ्मात्रशेषैरतिजरठतया सन्ततैश्चोपवासैः
प्राणानन्तर्दधानैः कथमपि शिथिलानास्थया कर्मणा च ।
तेजोगम्यानुभावैरुटजमवयवैः पक्तिमोर्वारुकल्पै-
र्धात्रीहस्तावलम्बः प्रविशति नृपतेरातुरो मातृवर्गः ॥७॥

**भरतः**—कथं मातरः (इति शत्रुघ्नेन सज्जास्तिष्ठति ।)

(ततः प्रविशति कैकेयीसुमित्राभ्यां सह कौसल्या ।)

**कौसल्या**—ननु सख्यौ,

यदि गुरुगिरा वत्सो रामो मुनिव्रतमास्थितो
वदतमनघः कस्यादेशात्तपस्यति लक्ष्मणः ।
क इह भरतादन्यः प्रोज्झेच्छ्रियं स्वयमागतां
तदिदमखिलं शान्ताजानेस्तपश्चरुवैभवम् ॥ ८ ॥

**कैकेयी**—(सलज्जं सबाष्पं च ।) ननु देव्यौ,

वत्साः सहोदरप्राणाः सत्यप्राणो महीपतिः ।
पतिप्राणे युवां द्वे च पापप्राणास्मि दुर्मतिः ॥ ९ ॥

**सुमित्रा**—ननु कैकेयि,

तव समीहितमाळि न चेदिदं कथमुदेष्यदियं विमला कथा ।
असति सागरधृष्टविचेष्टिते त्रिपथगास्तु कथं सुरदीर्घिका ॥

तन्नावज्ञातुमर्हसि कुलस्य लोकस्य च परमोपकारिणमात्मानम् ।

**कौसल्या**—अवितथमाह सुमित्रा । तत्सख्यौ, आगच्छतं वत्सं भरतमाश्वासयितुं लङ्कापुरे प्रवृत्तिमवगन्तुं च । (परिक्रामति ।)

**भरतः**—(ससंभ्रममुपसृत्य ।) अम्बाः, अभिवादयावहे । (इति शत्रुघ्नेन सह प्रणम्य, यथोचितमासनेषूपवेश्य च ।) अधुना हि भगवता अस्मत्कुलगुरुणा समाधिदृष्ट आर्यस्य वृत्तान्तः ।

**कौसल्या**—वत्स, वयमपि तदाकर्णने पर्युत्सुका एव स्मः ।

**शत्रुघ्नः**—नन्वम्बाः, कियान् भागो युष्माभिः पूर्वमाकर्णितः ।

**कौसल्या**—वत्स, सीताप्रत्यर्पणाय विभीषणानुनयान्तं श्रुतम् ।

**शत्रुघ्नः**—ततः क्रुद्धेन तेन धूर्तेन विद्रावित आर्यं शरणं गतस्तेन सपदि तत्रैव लङ्काराज्येऽभिषिक्तश्च ।

**मातरः**—अद्भुतमद्भुतम् । यदयं वत्सः शत्रोरनुजेऽपि स्वजनाभिमानं कृत्वा, जीवत्यपि तस्मिंस्तद्राज्येऽभिषिक्तवान् ।

**शत्रुघ्नः**—रामे क्रुद्धेऽपि कथं जीवति रावणः । पश्यत

दानं करे पादतले च तीर्थं बाहौ जयश्रीर्वचने च सत्यम् ।
लक्ष्मीः प्रसादे प्रतिघे च मृत्युरेतानि रामस्य निसर्गजानि ॥

**भरतः**—हा प्रपन्नबन्धो रघुनाथ,

पादच्छाया तवान्येषां सर्वसंतापहारिणी ।
तस्य ते पादपच्छाया घर्मार्तस्य परायणम् ॥ १२ ॥

(इति रोदिति ।)

**कौसल्या**—वत्स, कृतं परिदेवितेन । शृणुमः शेषमपि ।

**भरतः**—अम्ब, श्रूयत एवाविदीर्णकर्णमनेन पापेन, ततः किम् ।

**शत्रुघ्नः** — ततस्तत्र युद्धोपक्रममाकर्ण्य ससंभ्रममुत्थितोऽहं भावज्ञेन भगवता निषिद्धोऽस्मि । शत्रुघ्न, अलमभिषेणनोद्यमेन । यतः

शूरः कौशिकशिष्यश्च न सहायमपेक्षते ।
रामः पलाशनिर्दाहे हविष्मानिव पावकः ॥ १३ ॥
तदनाकुलं स्थीयतामिति ।

**सर्वे**—अमोघाः सन्तु ब्रह्मर्षेराशिषः ।

(प्रविश्य ।)

**दौवारिकः**—महाराअ, कोसिअसीसो सुणस्सेहो आअदो। (ट)

**भरतः**—(ससंभ्रमम् ।) तेन हि वत्स, त्वमेव विधिवत्सभाजयित्वा प्रवेशयार्यस्य सतीर्थ्यं मुनिम् ।

**शत्रुघ्नः**—तथा (इति निष्क्रम्य शुनःशेपेन सह पुनः प्रविशति।)

**शुनःशेपः**—(पुरोऽवलोक्य स्वगतम् ।) कथमयमेव स भरतः। य एषः

जटां धत्ते मूर्ध्ना नरपतिकिरीटार्चितपद-
स्त्वचं वस्ते कट्यां सकलवसुभोक्ता तरुभवाम् ।
क्षितौ वृस्यामास्तेऽनितरसुलभाध्यासनविभुः
किमु ब्रह्मर्षित्वं गुरुरिव ममाप्तुं व्यवसितः ॥ १४ ॥

(उपसृत्य प्रकाशम् ।) स्वस्ति सहपरिवाराय राजर्षये ।

**भरतः**—(आसनादिनोपचरन् ।) भोस्तपस्विन्, अपि निर्विघ्नसिद्धिरास्ते तत्रभवान् कौशिकमुनिः ।

**शुनःशेपः**—ननु राजर्षे,

अवन्ति वीर्येण नृपा हि भौतिकादुपप्लवाद्दैवकृतात्तु तापसाः।
त्वयि प्रधाने तपतां च भूभृतां प्रजाधिनाथे कथमस्त्वसिद्धता॥

अतः सर्वं शम् । तेन प्रीणितोऽसौ किमपि पारितोषिकं प्रेषयति ।

**भरतः**—(सोत्कण्ठम् ।) केन वानुग्रहेण पुनरस्मत्कुलमनुगृह्णाति सः।

**शुनःशेपः**—अद्य तेन मुनीन्द्रेण प्रणीतं नातिविस्तृतार्थं डिमजातीयकं भद्रोदयं नाम किमप्यभिरूपं रूपकम् ।

---

(ट) महाराज, कौशिकशिष्यः शुनःशेप आगतः ।

भरतः—अहो सर्वमथीना महामुनेः शक्तिः, यदयं तपसीव कवित्वेऽपि परां काष्ठामारूढः।

शुनःशेपः—ननु राजर्षे, एतदपि सिद्ध्यन्तरमेव, तदुत्पश्यतु भवान्

तपस्या कविता चेति द्वे सिद्धी सिद्धिमीप्सताम्।
आद्यात्मनीना कृच्छ्रा च सार्वा च सरसेतरा ॥ १६ ॥

अतः स्थाने खल्वेतत्। स च भवतः सदसि तत्प्रयोक्तव्यं मन्यते।

भरतः—(सनिर्वेदम्।) भोस्तपस्विन्, नायं प्रेक्षणकोचितः समयः।

शत्रुघ्नः—आर्य, तथा न मन्तव्यम्।

यज्ञापदेशतोऽग्रे श्रेयो विदधे महत्तरमसौ नः।
अस्तोकगर्भितफलाः स्तोकोद्देशा महात्मनामीहाः ॥ १७ ॥

तस्माच्छुभोदर्कं मुनेः शासनमनुल्लङ्घनीयम्।

भरतः—भो ब्रह्मन्, क्व शैलालिनः।

शुनःशेपः—ते हि रङ्गस्थले सज्जास्तिष्ठन्ति।

भरतः—वत्स, समाहूयन्तां सर्वाः प्रकृतयः प्रेक्षणकाय।

शत्रुघ्नः—तथा (इति निष्क्रान्तः।)

भरतः—अम्बाः वयमपि तत्रैव गच्छामः। (इति परिक्रम्यवलोक्य (च) कथं सर्वेऽपि वत्सेन सह सज्जाः (इति प्रविश्यासनपरिग्रहं करोति।)

सुमन्त्रः—ननु भोः नाट्याचार्याः, प्रस्तूयतां रूपकम्।

(नेपथ्ये।)

विष्फूर्जद्घनरवदर्पशातनोग्र-
हुंकारज्वरितदिगन्तकुम्भिकर्णः।
दंष्ट्राग्रक्रकचविपाटितारिवक्षा-
श्चिरं वः स्फुरतु सतां गतिर्नृसिंहः ॥ १८ ॥

( नान्द्यन्ते ।)

**सूत्रधारः**—भो भोः सभास्तारा:, अद्य खलु कौशिकमुनिप्रणीतं भद्रोदयं नाम रूपकं प्रयोक्तुं प्रवृत्ताः स्मः। तत्र युष्माभिर्दत्तावधानैर्भाव्यम्। (आकाशे कर्णं दत्त्वा।) किं ब्रूत — 'अम्बरे समेघाडम्बरे किमित्यवधातुं शक्यम्' इति (विहस्य ।)

उदिते शारदे चन्द्रे मेघनादस्य का कथा ।
उदीर्णे पन्नगारातौ न सर्पः परिसर्पति ॥ १९

(नेपथ्ये ।)

अयि दुरात्मन् नटापशद, कथं मामेव क्षिपसि । एष न भविष्यसि।

(पुनस्तत्रैव ।)

भो भरतपुत्र, सत्यमाह भवान् , समाप्तप्रायैवाद्येन्द्रजितःकथा ।

**भरतः**—(सकौतुकम्। ) कथमस्मदीया कथैव प्रस्तूयते, नूनं रघुकुले बलवदभिमानो मुनेः ।

**सूत्रधारः**—(नेपथ्याभिमुखमवलोक्य ।) कथमुपक्रान्तं रामरावणयोधानामायोधनम् । तदहमप्यनन्तरकरणीयाय सज्जीभवामि ।

(इति निष्क्रान्तः।) (प्रस्तावना ।)

(ततः प्रविशत्येकतो राक्षसयोधैः सममिन्द्रजित् । अन्यतो वानरयोधैः समं रामलक्ष्मणसुग्रीवविभीषणान् पुरस्कृत्य हनूमान् ।)

**हनूमान्**—(सावष्टम्भम् ।) अयि दुरात्मन् मेघनाद, क्षणं तिष्ठ । अद्यैव त्वमक्षस्य पन्थानुप्रस्थास्यसे ।

**इन्द्रजित्**—(उद्धतम् ।) रे रे मर्कटकीट, दिष्ट्या पुनः प्राप्तोऽसि । संप्रत्येव त्वां प्रेतराजस्याभिप्रेतातिथिं करोमि ।

**अङ्गदः**—

गजगवयगवाक्षनीलमैन्दद्विविदसुषेणमुखा वलीमुखेन्द्राः ।
कुणपचरवरूथिनीशपाथोनिधिमभिमन्थत मन्थथो यथाब्धिम् ॥

**प्रहस्तः**—

धूम्राक्षयूपाक्षनिकुम्भकुम्भप्रजङ्घकाकम्पनकम्पनाद्याः।
अक्षौहिणीशाः क्षिपत प्लवङ्गान्वह्नौ पतङ्गानिव शस्त्रवह्नौ॥२१॥

**भरतः**—कथं तीक्ष्णतरं संप्रहरन्ते उभये च सैनिकाः।

**नीलः**—(प्रहस्तं गृहीत्वोच्चैः।) राक्षस, इन्द्रजित्किलासि। अतस्त्वं

नरान्तकः सुरान्तकोऽपि चान्तकान्तिकं गतौ
महोदरो हतोदरस्त्रिमस्तको विमस्तकः।
अकम्पनश्च कम्पितः प्रहस्त एष हस्तगः
प्रवीर रक्ष रक्षसां चमूपतिं मुमूर्षितम्॥२२॥

**इन्द्रजित्**—(विलोक्य सक्षोभम्।) कथं प्रहस्तादयो बहवो हताः।
(इति सर्वतः शरासारैर्वर्षति।)

**वानराः**—हतोऽहं गतोऽहं मृतोऽहं द्रुतोऽहं
विलूनोऽस्मि वाले निकृत्तोऽस्मि हस्ते।
पदा खञ्जितोऽहं हृदा कुब्जितोऽहं
विपद्ये कमद्य प्रपद्येय सद्यः॥२४॥

(इत्याक्रुश्य सर्वतः पलान्ते।)

**अङ्गदः**— रे रे दुरात्मन् मेघनाद, एष हतोऽसि (इति तस्य रथे प्रहरति।)

**सुग्रीवः**—अहो वत्सेन ध्वस्ताङ्गः शताङ्गः। क्वासौ दुरात्मा।

**लक्ष्मणः**— आर्य, अभ्रमण्डलात्समापतत्यदभ्रा शरवृष्टिः, तन्नूनमेष मेघनादो मायया मेघमण्डलेऽन्तर्हितो वर्तते। तदेनमभियुध्यावहे।

**भरतः**—(विलोक्य। सविस्मयम्।) वत्स, कथमूर्ध्वमुखैः पत्रिभिरभि मेघमण्डलं विध्यतो राघवौ।

**इन्द्रजित्**—अयि मर्त्यडिम्भौ, अद्य नः प्रभातं सुप्रभातम्,

अहं नराशोऽस्मि युवां नरौ वशे ममाशुगाशा युवयोस्तथाशुगाः।
क्षुधा विडालस्य विमृग्यतः पुरः स्वयं पतन् किं दायितो न मूषकः॥

(इति पराग् प्रयुङ्क्ते ।)

भरतः—कथं नागपाशैर्बद्धौ निपातितौ च रघुवीरौ, अयि कैकेयि,

नृपतिर्वरपाशेन त्वया बद्धो हि तत्फलम् ।
प्रपश्य शरपाशेन निबद्धौ नृपतेः सुतौ ॥ ११ ॥

अथवा नायमवसरः परिदेवनस्य। (सक्रोधम् ।) वत्स, क्व मे सज्जः।

शत्रुघ्नः—आर्य, प्रेक्षणकमिदम् । अतः शेषमपि प्रेक्षावहे ।

वानराः—हा जगदेकवीरौ, हा प्रचण्डदोर्दण्डौ, हा असहाय-शूरौ, हा रघुवीरौ, कथं युवामप्येतां गतिं गमितौ स्थः । युष्मदधीना खलु सर्वस्य सुजनलोकस्य तपस्विन्याः सीतादेव्याश्च स्थितिः । अतः कथंचिच्चक्षुरुन्मीलयतम् , अस्मानाश्वासयतम् । (इति परिवार्य क्रन्दन्ति ।) (प्रविश्य पुष्पकविमानेन ।)

सीता—(ससंभ्रमम् ।) सखि सरमे, कथय कुत्र मे प्राणनाथः सानुजो निबद्धः ।

सरमा—णं इदो णादिदूरे एव्व वाणराणं मज्झे । (ठ)

सीता—(निरूप्य ।) आः किमिदम् । (इति मूर्छति ।)

कौसल्या—(विलोक्य ।) सखि सुमित्रे, का न्वियमेकवेणीधरा क्लिष्टैकवसना क्षामक्षामाङ्गी च बाला विमानस्थैव मूर्छितेव दृश्यते ।

सुमित्रा—देवि, सीता खल्वेषा ।

कौसल्या—(ससंभ्रमम् ।) कथं सीता। अयि रत्नगर्भागर्भसंभवे, कथमेवं दुर्दशापरीतासि । अयि जनकेन्द्रनन्दिनि, यदि दुर्भगाया मे स्नुषा नाभविष्यस्तदा नूनमिमां दशां नागमिष्यः । सखि, पाशबद्ध-

(ठ) नन्वितो नातिदूर एव वानराणां मध्ये ।

योर्वत्सयोरियं दशापि न तथा मां चूर्णयति, यथा वत्सायां इयमवस्था ।
(इति मूर्छति ।)

सुमित्रा—देवि, समाश्वसिहि समाश्वसिहि ।

सरमा—णं देइ, समस्ससिहि समस्ससिहि। (ड)

सीता—(समाश्वस्य ।)

हा नाथ ते न वृजिनं किमपि स्मरामि
नो लक्ष्मणस्य च तथा मम वा भवेऽस्मिन् ।
एषा दशा यदि तवापि सहानुजस्य
पाकोन्मुखानि मदघानि पुरार्जितानि ॥२७ ॥

(इति पुनर्मूर्छति ।)

सरमा—सहि सीदे, समस्ससिहि । ण खु धम्मणिच्चाओ अकालमिच्चुणा अहिहूअंदि। धम्ममुत्ती एव्व दे भट्टा, तुमं वि पदिदेवदा सि । अण्णं अ। वेहव्वदूसिदं इत्तिआजणं एदं विमाणं ण भरइ। ता ठिरा होइ। जो को वि णाअसत्तू आअमिअ पासादो मोअइस्सदि ।
(इत्याश्वासयति ।) (ढ)

विभीषणः—मा भैष्ट मा भैष्ट वानरवीराः, यतः

यं दृष्ट्वा केतनाग्रे सुररिपुपृतना साध्वसेन प्रणष्टा
चक्रे दत्त्वाप्यरिभ्यो जयमसुररिपोर्मोघतामायुधानाम् ।
सोऽयं शक्रस्य जेता प्रसभहृतसुधः पक्षिराड् वातरंहाः
पक्षच्छायापिशङ्गीकृतगगनतलो दृश्यते नागशत्रुः ॥२८॥

सीता—(वीक्ष्य सहर्षम् ।) सखि, कथं वैनतेयस्य पक्षवातेनैव

---

(ड) ननु देवि समाश्वसिहि समाश्वसिहि । (ढ) सखि सीते, समाश्वसिहि। न खलु धर्मनित्या अकालमृत्युनाभिभूयन्ते । धर्ममूर्तिरेव ते भर्ता, त्वमपि पतिदेवतासि । अन्यच्च । वैधव्यदूषितं स्त्रीजनमेतद्विमानं न भरति तस्मिथरा भव यः कोऽपि नागशत्रुरागत्य पाशान्मोचयिष्यति ॥

विधूताः पाशभूता नागाः। कदाचिदार्यपुत्रः प्रेक्षिष्यते। तदशोकवनिकामेव यावः। (इति निष्क्रान्ता।)

(ततः प्रविशति तार्क्ष्यः।)

**तार्क्ष्यः**—(सकौतुकम्।) अहो आश्रितवात्सल्यं भगवतः। तथा हि

नागाधिराजशयनस्य जगद्विधातु-
रेते कियन्त उरगास्तदपि प्रभुर्मे।
अस्मिन् भवेऽपि जनयन् बत मत्प्रसङ्गं
बन्धं किलानुहरते श्रितबन्धहारी ॥ २९ ॥

(इत्युपसर्पति।)

**रामलक्ष्मणौ**—(ससंभ्रममुत्थाय) नमस्ते निष्कारणबन्धवे इच्छावो भगवन्तमवगन्तुम्।

**तार्क्ष्यः**—(शन्तमेन पाणिना तावव्रणौ कृत्वा।) ननु वीरौ,

अहं गरुत्मान् युवयोरिमां गतिं निशम्य संपातिमुखादुपागतः।
विजित्य शत्रून् कृतिनौ परन्तपौ सुखं पुरं गच्छतमस्तु वां शिवम्॥

एष साधयामि। (इति निष्क्रान्तः।)

**भरतः**—(सहर्षम्।) नमस्ते छन्दोमयाय भगवते विष्णुरथाय

**इन्द्रजित्**— अयि डिम्भौ, कथं निर्मुक्तौ स्थः।

**हनूमान्**—ननु हरीश्वराः, इदानीं सर्वे पुरमवस्कन्दामः। मितः परमुदासिकया (इति निष्क्रान्ताः।)

इत्यार्षे भद्रोदये पाशमोचनं नाम प्रथम उपाङ्कः॥

(ततः प्रविशति सेनया समभिन्द्रजित्।)

**इन्द्रजित्**–रे रे शाखाः,

नागान्मोक्षे प्रभुत्वं किमपि न भवतामेष तार्क्ष्यप्रभाव-
श्छिन्नं नैतावता नः किमपि मम पुनर्वीर्यमीक्षध्वमुग्रम्।

मत्यस्त्रं यत्र नास्ति प्रतिविधिरपि नो तत्र दिव्यास्त्रसूत्रे
प्रोतैर्युष्माभिरद्य स्रजमिव बृहतीं प्रेषये प्रेतभर्तुः ॥ ११ ॥

(प्रविश्य सर्वैः सह ।)

लक्ष्मणः—साटोपम् ।))

रे रे क्षुद्र क्षपाट क्षणमिव धुरि मे तिष्ठ दिष्ट्यासि दृष्टः
स्थामोग्रं ते समग्रं विभृहि भरसहं येन शक्रं व्यजेष्ठाः।
अद्य त्वद्गात्रमस्त्रैर्भिदुरसहचरैः खण्डशः खण्डयित्वा
सौमित्रिर्मित्रधर्मा नवपिशितचलांस्तर्पयत्येष गृध्रान् ॥१२॥

भरतः—(विलोक्य । सहर्षम् ।) वत्स, पश्य पश्य, वत्सलक्ष्मणस्यैकेनैवास्त्रप्रयोगेण शरीरमात्रशेषः संवृत्तोऽरातिः ।

सुग्रीवः—(विलोक्य ।) कथं पुनः सोपकरणोऽसौ । हन्त कथमेतत्

क्षणं धुरि क्षणं पराक् क्षणं च दक्षिणोत्तरा
क्षणं घनावनान्तरे स दृश्यते न दृश्यते ।
पतन्ति पुङ्खपुङ्खिताः शराः शरारवः परं
कथं नु किंनु कुत्र वास्त्रमीर्यतां स वार्यताम् ॥ १३ ॥

इन्द्रजित्—(साट्टहासम् ।) लक्ष्मण, त्वं किलेन्द्राजितं हनिष्यसि ।

भरतः—हा कथमिदम् । ब्रह्मास्त्रेणोभावपि राघवौ कृत्स्नेन बलेन सह पुनर्निपातयति राक्षसः ।

शत्रुघ्नः—आर्य, दिष्ट्या विभीषणजाम्बवन्तावालपन्ताविव । तदवहितौ शृणुवः ।

जाम्बवान्—(चक्षुषी निमील्य ।) नन्वत्र पदशब्दः श्रूयते । कथयत कोऽभ्यागतः । शस्त्रव्यथया चक्षुरुन्मीलयितुं न शक्नोमि ।

विभीषणः—ऋक्षराज, एषोऽहमस्मि विभीषणः ।

जाम्बवान्—भो विभीषण, अपि जीवति मारुतिः ।

हनूमान्—आर्य, एषोऽहमभिवादये मारुतिः ।

जाम्बवान्—(सहर्षम् ।) भद्र, दिष्ट्या जीवसि ।

विभीषणः—ननु भोः, कथं राघवयोः सुग्रीवस्य च कुशलम-पृष्ट्वा हनूमतः कुशलं पृच्छसि ।

भरतः—ममापि श्रोतव्यमेतत् ।

जाम्बवान्—तात विभीषण,

यथेन्द्रियकलापोऽयं प्राणाधीनो न चान्यथा ।
मारुतेर्जीविते तद्वत्कृत्स्नमस्मद्बलं स्थितम् ॥ १४ ॥

तेन हि हनूमन्, हिमवतः शिखरान्मृतसंजीविनीं नामौषधिमाहृत्य सञ्जीवय सर्वानस्मान् ।

हनूमान्—(सोत्साहम् ।) एष प्रस्थितोऽस्मि (इति निष्क्रान्तः ।)

इन्द्रजित्—ननु यातुधानाः, पश्यत भुवि शायितं परबलं साम-स्त्येन । किंतु बहवोऽस्मदीयाश्च भुवि शेरते । तावदेव तान् समुद्रे प्राम्यत, यावदहं पित्रे निवेदयामि (इति निष्क्रम्य पुनः प्रविश्यावलोक्य च ।) कथं क्षणेनानुष्ठितमस्मच्छासनम् । यदत्र राक्षसकुणपेषु शकलमात्रमपि न दृश्यते। (अन्यतो विलोक्य ।) कोऽयं वानरो गिरिशिखरेणाभिपतति । कथं हनूमानिव । (सविषादम् ।) किमस्मिन् प्रलयेऽप्यप्रणष्टोऽयं दुष्ट-वानरः । किमस्य गिरिकूटेन प्रयोजनम् । (इति पश्यति ।)

शत्रुघ्नः—(सहर्षम् ।) हनूमतौषधिगिरावानीतमात्रे

आर्यावोषधिगन्धगन्धवहतः स्वस्थौ सुषुप्तोत्थव-
त्सर्वैः साकमनुप्लवैः किलिकिलां कुर्वद्भिरानन्दतः।
न त्वेकोऽपि रिपोर्बले मृतिजुषां क्षिप्ता यतस्तेऽम्बुधा-
वग्रे भाविफलानुरूपसरणौ बुद्धिं नियुङ्क्ते विधिः॥१५॥

रामः—(सश्लाघबहुमानम् ।) ननु हनूमन्,

जीवातुर्नस्त्वं च नागान्तकश्च त्रातावावां तेन सर्वे त्वया तु।
सर्पद्वेषः कारणं तत्प्रवृत्तेर्भक्त्यास्मासु प्रोषतस्त्वं महात्मन् ॥

इदं ते पारितोषिकम् (इति समालिङ्गति ।)

भरतः—(सगौरवम् ।) नूनं युक्तकारी भृत्यप्रियश्च मे प्रभुः।

रामः—हनूमन्, महार्घेणानेन शृङ्गेण गिरिराजस्य विरहो मास्तु।

हनूमान्—एष प्रतिहरामि । (इति तेन सह निष्क्रान्तः।)

इन्द्रजित्—कथमत्रापि प्रभुत्वं दर्शितं दैवहतकेन (संवरणं नाटयित्वा। पुनः प्रविश्यावलोक्य च।) अयं हनूमानोषधिगिरिं यथास्थानं निवेश्य पुनरागच्छति । तदमुमेवानेन प्रयोगेण व्यामोह्य, तेन मन्दोद्यमेषु परेषु समीहितं साधयामि । (अभिमुखं परिक्रम्योच्चैः।) रे रे मर्कट, पश्य

अस्याः कृते नु बलयोरुभयोर्बहूनां
बाधो वधश्च सुमहांस्तदिमां निहन्मि ।
एतन्मयासुरनुनश्यतु सोऽपि शत्रु-
रायोधनेन सह वोऽस्तु विरामवृत्तिः ॥ १७ ॥

इति वामहस्ते सीतां निधाय दर्शयति ।

सीता—(सबाष्पम् ।)

त्वरितमेहि हरीश्वर पाहि मां ननु विडालमुखे पतिता शुकी।
तव पुनर्मम जीवितदानतः सुकृतमक्षयमस्तु नमोऽस्तु ते॥१८॥

हनूमान्—(विलोक्य ससंभ्रमम्।) अयि दुरात्मन्, कथं त्वमपि वीरोऽसि, यत्पुरोवर्तिषु परिपन्थिषु निरागसं स्त्रीजनं जिघांससि । देवि, मा भैषीः, एष आगतोऽस्मि । (इति सत्वरमभिद्रवति ।)

इन्द्रजित्—अयि मर्कट, उपदिश्यतामयं धर्मस्ताटकाहन्त्रे ।

(इति सीतायाः शिरः खड्गेन छित्वा पुनः संवरणं नाटयति ।)

कौसल्या—हा कथं हता मे बाला (इति मूर्छति ।)

सुमित्रा—देवि, समाश्वसिहि समाश्वसिहि । नूनमत्रापि किमप्यद्भुतं मङ्गलं चोपपादयिष्यते दैवेन । अतो निर्वृता भव ।

हनूमान्—हा किमिदम् । दृष्टा सीतेति यथा निवेदितं, तथैव

जिह्वया नष्टा सीतेति कथं निवेदयेयम् । किं करोमि मन्दभाग्यः । (इति रुदन्मन्दमन्दं गच्छति ।)

**रामः**—(विलोक्य साशङ्कम् ।) ननु हनूमन्, प्रहर्षकालेऽत्र किं ते विषादकारणम् ।

**हनूमान्**—(सबाष्पम् ।) देव, किं ब्रवीमि, सर्वात्मना प्रध्वंसितमस्मत्समीहितं पापेन ।

**रामः**—(ससंभ्रमम् ।) न खलु व्यापादिता मे दयिता ।

**हनूमान्**—देव, (इत्यर्धोक्ते पटान्तेन मुखमाच्छाद्य रोदिति ।)

**रामः**—नूनं समुन्मूलितं मे जीवितसर्वस्वम् । हा प्रिये, हा जनकेन्द्रनन्दिनि, हा सीते,

बिम्बाधरे कुवलयाक्षि सरोजवक्त्रे
कुन्दस्मिते सुदति चम्पकचारुनासे ।
सत्येव रामहतके स्वयमप्रणष्टे
हा किं गतासि निहतासि मृतासि बाले ॥ १९ ॥

भोः सुग्रीव, वत्सं लक्ष्मणमादाय सपरिवारः प्रयाहि। ननु हनूमन्, सज्जीक्रियतामग्निर्मम प्रपतनाय ।

**भरतः**—(ससंभ्रमम् ।) ननु सुमन्त्र, शीघ्रं सज्जीक्रियतां ममाप्यग्निः।

**रामः**—नार्तो गुरोर्न हरणे न वधेऽपि देव्या
नात्मात्ययेऽपि च तथा व्यथते मनो मे ।
एतत्तु पीडयति दाशरथिर्वदन्
साम्यत्यसाधितविभीषणराज्यदानः॥ २० ॥

अथ वा वत्स लक्ष्मण, उच्यतां मद्वचनाद्राजा भरतः ।

**भरतः**—अवहितः शृणोमि। किं शास्ति मे गुरुः ।

**रामः**—वत्स भरत, यदि ते मयि गौरवं, तदा दीयतां विभीषणायास्मद्राज्यम् ।

**भरतः**—सुमन्त्र, स्थीयतां तर्हि । गुरुसन्देशानुष्ठानानन्तरं प्रवेष्टव्योऽस्माभिरग्निः ।

**विभीषणः**—भो वानरवीराः, समुपस्थितेऽपि विक्रमकाले कुतो वा भग्नोत्साहा इव दृश्यन्ते भवन्तः (इत्युपसृत्य राममवलोक्य। सोद्वेगम् ।) नाथ, किमिदम् ।

**सुग्रीवः**—सखे विभीषण, (इति सीतोदन्तं कर्णे कथयति।)

**विभीषणः**—नाथ, कथं सीता हृता, अनृतमेतत् ।

**रामः**—ननु पश्यत एव हनूमतो वृत्तं तत् ।

**विभीषणः**—तर्हि मायाप्रयोगोऽयम् । जीवन् हि रावणः सीतादेवीं मनसापि न विहातुमिच्छेत् , किं पुनर्विहन्तुम् ।

(रामो दीर्घमुष्णं च विनिःश्वस्य मुखमवनमयति ।)

**लक्ष्मणः**—ननु लङ्केश्वर, किमनेन तस्य प्रयोजनम् ।

**विभीषणः**—कथमेवमुच्यते । इन्द्राजित्खल्वसौ ।

**स वञ्चयन्नोऽभिचरन्निकुम्भिलां**
**तनोति मायी परशक्तिशातनीम् ।**

**रामः**—(सरभसम् ।) यद्येवं किमञ्जसा कर्तव्यम् ।

**विभीषणः**—

**विहन्तुमिष्टिं विनिहन्तुमप्यरिं**
**नियुज्यतां लक्ष्मण आशु सैनिकैः ॥ ४१ ॥**

**लक्ष्मणः**—(ससंभ्रममुत्थाय ।) युक्तमाह विभीषणः । एष प्रस्थितोऽस्मि शत्रुसंहाराय । तद्देहि मेऽनुज्ञाम् (इति राममभिवाद्य ।) ननु वीराः, प्रस्थीयतां भवद्भिः । (इति सेनया सह निष्क्रान्तः।)

**भरतः**—वत्स, किं मायाविलसितमेतत् । नन्वधुनापि परमार्थमिव मे प्रतिभाति। (सानुस्मरणम् ।) वत्स, अनेन निदर्शनीकृतो भगवतो वसिष्ठस्योपदेशः । तथा हि

**मायामात्रं विश्वं मायासीताचरित्रमिव नूनम् ।**
**मिथ्यापि तथ्यबुद्ध्या भ्रमयत्यातत्त्वविज्ञानात् ॥ ४२ ॥**

**शत्रुघ्नः**—(पुरोऽवलोक्य ।) आर्य, पश्य वानरैर्नाशितयागस्य रावणेरार्यलक्ष्मणस्य च सुतुमुलं संप्रहारम् ।

**रामः**—भो विभीषण, कावेतावतिमात्रकायौ चलन्ताविवाचलाविवेन्द्रजितः पृष्ठगोपौ भवतः । तयोरेकं कुम्भकर्णमिव तर्कयामि । अथापरः कः ।

**विभीषणः**—देव, अपरः पुनरतिकायो नामान्यो रावणिरिन्द्रजितस्तुल्यवीर्यश्च ।

**रामः**—तेन हि प्रथमं कुम्भकर्णं निपातयामि। पश्चादतिकायं च।

**विभीषणः**—(सविस्मयम् ।) देव, यावद्भवतः सायकेन कुम्भकर्णः खण्डशो विलूयते, तावदेव रावणिद्वयमप्येकेन शरेण निघ्नता सौमित्रिणा भवतः पुनरिषुसंयोगश्रमो निवार्यते ।

**रामः**—किं हतौ द्वावपि रावणपुत्रौ । एह्येहि वत्स,
'तातेन कौशलमिदं' (इत्यादिकं पुनः पठंस्तमालिङ्गति ।)

(नेपथ्ये पुष्पवृष्ट्या सह ।)

**जय जय लक्ष्मण त्रिदशनायकदुर्विषह-**
**प्रथितवरास्त्रशस्त्रनिकुरुम्बकरम्बितया ।**
**बहुविधमायया समुपबृंहितमिन्द्रजितं**
**निहतवता त्वयाखिलमरक्षि जगद्दुरितात् ॥ ४३ ॥**

**रामः**—सम्यगनुमोदितं तातेन । इदानीमनृणोऽस्मि विभीषणस्य ।

**कौसल्याकैकेय्यौ**—सखि, दिष्ट्या वर्धामहे। (इति सुमित्रां परिष्वजेते।)

**भरतः**—अम्ब, अद्य प्रतिष्ठितं रघुकुलं सुप्रजसा भवत्या ।

**रामः**—अनेनैवोत्साहेनारिं हन्तुं प्रयतामहे । (इति निष्क्रान्ताः सर्वे।)

**इत्यार्षे भद्रोदये रावणिनिबर्हणं नाम द्वितीय उपाङ्कः ।**

(नेपथ्ये ।)

पुत्रेष्वस्तं गतेषु प्रविशति दयितां दीर्घनिद्रां सहोत्थे
ध्वस्ते चामात्यवर्गे भवति निजभुजामात्रशेषे बले च ।
पुर्यामापूरितायां विलपननिनदैरात्मगर्होपबर्हैः
शोकामर्षाकुलात्मा परिपतति जवाद्रावणो जन्यभूमिम् ॥

(चूलिका ।)

(प्रविश्य ।)

**रावणः**—(समन्तादवलोक्य । सव्यथम् ।) आः किमिदम् ।

नो मातङ्गो न वाजी क्वचन न पदिको दृश्यते नो शताङ्गः
संवृत्ता सिन्धुकूलंकषरुधिरमयी वाहिनी वाहिनी मे ।
उन्मज्जद्भिः शिरोभिः करचरणमुखैरङ्गकैरुह्यमानै-
रुन्नृत्यद्भिः कबन्धैर्हरति मम मनो दारुणाघातभूमिः ॥ ४९ ॥

(पुरोऽवलोक्य ।) एतावेवास्मत्कुलान्तकौ मर्त्यडिम्भौ ।

(सपरिवारः प्रविश्य ।)

**रामः**—वत्स, इदानीं समाप्तव्या रावणकथया सह रणकथा ।

**रावणः**—(सक्रोधम् ।) अयि मदान्ध, पश्य कस्य कथेदानीं समाप्यते ।

**शत्रुघ्नः**—आर्य, पश्य रथिना रावणेन सह युध्यमानस्यार्यस्य दिव्यरथोपस्थानम् । (प्रविश्य ।)

**मातलिः**—देव, मेघनादवधप्रीणितो देवराजो भवते सांग्रामिकोपकरणसंपन्नमिमं रथं प्रेषयति ।

**रामः**—तेन ह्यवश्यं माननीय इन्द्रप्रसादः (इति रथमारुह्य, तदीयं कवचादि धारयति ।)

**भरतः**—(विलोक्य सहर्षम् ।) इदानीं साक्षान्महेन्द्र एव संवृत्तो मानवेन्द्रः ।

**लक्ष्मणः**—ननु पश्यतं वानरराक्षसेश्वरौ, अद्य हि

तामिस्रं रावणोऽस्त्रं सृजति नुदति तद्भास्करीयेण राम-
स्तत्पार्जन्येन भूयः स्थगयति विधुनोत्येष वायव्यतस्तत् ।
विष्टम्भात्याद्रिभिस्तच्छकलयति लघु ह्लादिनीनां वितानै-
र्भूयो भूयोऽस्त्रयोगेष्विति निहितरसौ क्रीडतो वीरवर्यौ॥

(पुनर्विलोक्य । सविचिकित्सम् ।)

लूयन्ते तालल़ावं दशवदनशिरांस्यार्यबाणेन याव-
त्तावत्तैर्भूयतेऽन्यैरनुगतनुगतज्ञानसन्तानधर्मैः ।
सिद्धिर्वौत्पत्तिकीयं किमयमपि रिपोः कोऽपि मायाप्रपञ्चः
कश्चेह व्व्युपायस्त्वमसि तमसि नस्ताम्यतां दिव्यचक्षुः ।

**सुग्रीवः**—ननु भोः, दृष्टो हि साधीयानुपायोऽस्मत्प्रभुणैव, यदयमभिहृदयं शरं प्रयुङ्क्ते ।

**लक्ष्मणः**—(विलोक्य सहर्षम् ।) हन्त हन्त ।

किमौर्वः किं भास्वान् प्रलयसहकारी किमु शिखी
किमिन्द्रज्योतिः स्यादिति जगति शङ्कातरलिते ।
उरः शत्रोर्भिन्दन्नधिकरमुपादाय तदसून्
विभोः पत्री नीडं पतग इव भूयः प्रविशति ॥ ४८ ॥

(नेपथ्ये पुष्पवृष्ट्या सह ।)

त्रैलोक्यकण्टकसमुद्धरणप्रचण्ड-
कोदण्डमण्डितमहाभुज वीरराम ।
सीतापते सुजनबान्धव दीननाथ
साकेतनाथ रघुनाथ चिराय जीयाः ॥ ४९ ॥

**कैकेयीसुमित्रे**—(सकौतुकम् ।) देवि, दिष्ट्या वर्धामहे वत्सरामेण।

**भरतः**—(सहर्षम् ।) भोः सुमन्त्र, संदिश्यतामेवम् ।

उन्नह्यन्तां पताका उपचरणविधिर्धीयतां धोरणानां
पुर्यां संश्लिष्यतां श्रीर्नवमहभरिता मण्डनश्रीश्च पौरैः ।

ज्ञातार्थाश्च क्रियन्तामिति सकलजनास्तावदाघोषणाभि-
त्रैलोक्यामेकवीरो जयति रघुपतिर्जानकीलक्ष्मणाभ्याम् ॥

**सुमन्त्रः**—यथाज्ञापयति कुमारः । (इति प्रतिष्ठते ।)

**रामः**—(ससंभ्रमम् ।) वत्स लक्ष्मण, अद्याभिषिच्यतां विभीषणः । आनीयतां च पुष्पकं प्रस्थानाय ।

**भरतः**—ननु सुमन्त्र, रामविजयेन सह समुच्चीयतां विभीषणाभिषेकोऽपि ।

**सुमन्त्रः**—तथा । (इति निष्क्रान्तः ।)

**रामः**—ननु हनूमन्, आनीयतां विरचितमण्डना सीता ।

**हनूमान्**—यथाज्ञापयति देवः । (इति निष्क्रान्तः ।)

इत्यार्षे भद्रोदये पौलस्त्यसंस्थापनं नाम तृतीय उपाङ्कः ।

(ततः प्रविशत्यलंकृतां देवीं पुरस्कृत्य हनूमान् ।)

**हनूमान्**—देवि, इत इतः ।

**सीता**—हनूमन्, यथावस्थितवेषैवाहमार्यपुत्रेण द्रष्टव्या, सत्येवं किमर्थं विरचिताकल्पां मां द्रष्टुमिच्छति मे प्रभुः ।

**हनूमान्**—ननु देवि, अद्य पूर्णो हि वनवासः । तत्कृतकार्योऽहं न क्षणमात्रमप्यत्र स्थास्यामि। अवश्यं मद्विरहातुरो भरत आश्वासनीय इति त्वरते स्वामी । अत एतदर्थं विलम्बो मा भूदित्येवमादिष्टवान् ।

(प्रविश्य ।)

**रामः**—वत्स, दिष्ट्या राज्येऽभिषिक्तो विभीषणः । स क्वेदानीम् ।

**लक्ष्मणः**—आर्य, पुष्पकेण सममागत एवैषः ।

(प्रविश्य ।)

**विभीषणः**—देव, भवत्कृपापात्रमेषोऽहम् । इदं च पुष्पकम् ।

**रामः**—ननु कपीश्वरराक्षसेश्वरौ, अस्त्यस्ति कुतूहलं वामस्मद्देशदर्शने।

**सुग्रीवविभीषणौ**—देव, न केवलमयोध्यादर्शन एव, अपि तु

साम्राज्यसंभृतां देवस्य लक्ष्मीं द्रष्टुं नितरां पर्युत्सुकाः स्मः सर्वेऽप्यमी वयम् ।

**रामः**—तेन ह्यारुह्यतां भवद्भिरिदं विमानम् ।

**सीता**—(सप्रश्रयमुपसृत्य ।) आर्यपुत्र, (इति प्रणम्याधोमुखी तिष्ठति।)

**रामः**—(सक्रोधं सभ्रूकुटीभङ्गं च ।) अयि जनकनन्दिनि,

**माष्टुं पराभवमरिर्निहतो न भूय-**
**स्त्वल्लिप्सया व्रज यथारुचि यत्कलत्रे ।**
**अङ्कस्थितेऽपि विशयो यदि हानमिष्टं**
**तस्मिंश्चिरं परगृहाध्युषिते किमन्यत् ॥ ९१ ॥**

अतो गम्यतां यथेच्छम् ।

**सर्वे**—हा कथममृताद्विषोद्गाराः । (इत्यधोमुखा विषीदन्ति ।)

**कौसल्या**—(सव्यथम् ।) कथं चारित्रकवचां वत्सां प्रति रामस्यैवेमान्यक्षराणि ।

**भरतः**—(सामर्षम् ।) आर्य, कथमार्यशीलायामार्यायामेव तवेयमनार्यविधा आशङ्का ।

**सीता**—(क्षणमधोमुखी स्थित्वा ।) नन्वार्यपुत्र, चिरेण परिशीलितशीलैवास्मि भवता । तथापि यदि न प्रत्ययः, एषा प्रत्याययामि । संशयिते तु चारित्रे न खल्वशोधितेनात्मना त्वामुपस्थातुमाशंसे ।

**सुमित्रा**—अहो चारित्रावष्टम्भो वत्सायाः । न जानीमः कथं प्रत्याययिष्यति ।

**सीता**—ननु सौमित्रे, समिध्यतामिहैवाग्निः, तेनैवात्मानं शोधयामि । न खलु निर्मलां हिरण्यशलाकामाश्रयाशोऽप्यत्तुमीष्टे ।

**कौसल्या**—हा कथं वत्सा वह्निं प्रविविक्षति । अयि भरत, शीघ्रमिध्यतामग्निर्मम प्रवेशाय ।

**भरतः**—अम्ब, सर्वानर्थहेतुना मया खलु प्रथमं प्रवेष्टव्योऽग्निः भोः सुमन्त्र, प्रदीप्यतां ज्वलनो ममात्मसंस्काराय ।

**सुमन्त्रः**—कुमार, द्वारप्रकोष्ठे प्रागेव सज्जितोऽग्निः ।

**भरतः**—तेन हि तत्र संस्करोम्यात्मानम् । (इत्युत्तिष्ठति ।)

**शत्रुघ्नः**—आर्य,क्षणं स्थीयतां, शेषमपि दृष्ट्वा सर्वैरपि प्रवेष्टव्योऽग्निः।

**रामः**—वत्स, शीघ्रमनुष्ठीयतां सीतासंदेशः । त्वरयति हि वत्स-भरतस्य दर्शनोत्कण्ठा ।

**लक्ष्मणः**—हा किं करोमि मन्दभाग्यः । (इत्यग्निं प्रज्वाल्य ।) प्रथममेष प्रविशामि पापीयान् । (इत्यग्निं प्रदक्षिणीकरोति ।)

**रामः**—(सक्रोधम् ।) अयि, कथं मर्यादामतिलङ्घसे (इति निवारयति।)

**सीता**—(अञ्जलिं बद्ध्वा ।)

त्वं पावकोऽसि भगवन्नसि जातवेदाः
शुद्धिः परा त्वमविशोध्यमहैनसां च ।
अन्तर्बहिश्चरसि वेत्सि च धर्मतत्त्वं
व्याचक्ष्व शीलमनवद्यमुतेतरन्मे ॥ १२ ॥

(इति निष्क्रान्ता ।)

**सर्वे**—हा कथमग्निं प्रविशति देवी । (इत्याक्रन्दन्ति ।)

**रामः**—एह्येहि लक्ष्मण, (इति विमानमारोहति ।)

**भरतः**—वत्स, दृष्टं द्रष्टव्यम् । आगतो ह्यार्यः । अतस्त्वरामहे अन्यथा हि लक्ष्मणमिवास्मानपि निवारयेत् । तदेहि ।

(इति शत्रुघ्नेन मातृभिश्च सममग्निं प्रदक्षिणीकरोति।)

**कौसल्या**—(अग्नौ पुष्पाञ्जलिं विकीर्य ।) अयि वत्स राम,
तव कृपा हि जनेषु निसर्गजा जलधरस्य यथामृतवर्षिता ।
कुत इयं तव चाशनिभीषणा परुषता किमु राक्षससङ्गजा ॥
(इति सबाष्पं निध्यायति।)

**कैकेयी**—देवि, शीघ्रं प्रविशामो वह्निम् । कृतं कालहरणेन ।

**भरतः**—(सक्रोधम्।) अयि कैकेयि, किमर्थं त्वयाग्निः प्रविश्यते। काममनुभुज्यतां वरप्रमादस्य संपूर्णफलं कुब्जया सह। (आकाशे लक्ष्यं बद्ध्वा।) भगवन् कौशिक, भद्रोदयं नामै किमिदं काव्यम्।

प्रविश्य।

**कौशिकः**—ननु राजन् भरत, भूतार्थवादिनो हि वयम्। अतो भद्रोदयमेवेदं काव्यम्। समीक्ष्यतां शेषमपि।

**शत्रुघ्नः**—(सकौतुकम्।) आर्य, पश्य पश्य तस्मादग्नेरुत्तिष्ठति भद्रासनस्थां सीतादेवीमुपादाय कोऽपि दिव्यः पुरुषः।

**कौशिकः**—राजन्, एष खल्वग्निः। समीक्ष्यतां तद्दर्शनार्थमागतानां देवानां विमानशतसंकुलं गगनतलम्।

**भरतः**—नमो रघुकुलभूत्यै सीतादेव्यै।

**अग्निः**—(उपसृत्य।) ननु भोः,

अन्वर्थं मम पावकत्वमधुना देव्यानया ते विभो
पातिव्रत्यतपोऽनलज्वलितया यत्सर्वभक्षोऽस्म्यहम्।
इक्ष्वाकोश्च कुलं निमेश्च महितं लोकत्रयं पावितं
शुद्धां स्वीकुरु रामभद्र जगतां भद्राय भद्रामिमाम्॥५४॥

(इत्यर्पयति।)

**भरतः**—वत्स, अद्य व्याख्यातमायायाः काव्यस्य च भद्रोदयत्वम्।

**रामः**—(सीतामङ्के निधाय।) ननु भो वीतिहोत्र,

जानामि सीतां प्रथमां सतीनां प्रशंसितुं तामयमुद्यमो नः।
को ज्ञातुमर्हत्यपरीक्ष्यमाणे रत्नस्य काचस्य च तारतम्यम्॥

**सुमित्रा**—देवि, अपि श्रुतं वत्सस्य वचनम्।

**कौसल्या**—(सस्पृहम्।) सखि, शृणोमि।

**अग्निः**—ननु देवि, किं ते भूयः प्रियमुपहरामि।

**सीता**— किमितः परमस्ति । तथापीदमस्तु ।

अस्तु भूत्यै कुलस्त्रीणां पातिव्रत्यमखण्डितम् ।

मनीषितानि सिध्यन्तु लोकैकान्तहितैषिणाम् ॥ ५६ ॥

**अग्निः**—तथास्तु । ( इति निष्क्रान्तः । निष्क्रान्ताः । सर्वे।)

इत्यार्षे भद्रोदये सीतामहिमप्रख्यापनं नाम चतुर्थ उपाङ्कः ।

समाप्तं च गर्भरूपकम् ।

---

**भरतः**— सुमन्त्र,संमान्यन्तां नटाः, निवेद्यतां च भगवते वसिष्ठाय।

(प्रविश्य ।)

**वसिष्ठः**— ननु भरत, संभ्रियन्तामभिषेकसंभाराः, आगतो हि रामः।

**भरतः**— भगवन्, प्रागेव सज्जितं सर्वम् ।

(प्रविश्य । )

**रामः**—देवि, दिष्ट्या प्राप्ताः स्मो वनवासस्य शत्रोश्चान्तेन सह स्वं देशम् । (पुरोऽवलोक्य ।) कथं वसिष्ठविश्वामित्रादिभिः सममस्मत्प्रतीक्षस्तिष्ठति वत्सभरतः ।

(इति पुष्पकादवतीर्य ।)

ननु भगवन्तौ, दाशरथिरामोऽभिवादयते

(इत्यभिवाद्य भरतशत्रुघ्नावाश्लिष्यान्यानपि यथार्हमुपचरति ।)

**वसिष्ठः**—राम, संनिहितो मुहूर्तः, तदलंक्रियतामासनम् ।

**रामः**— यथादिशत्याचार्यः । (इति सीतया समं सिंहासनमध्यास्ते ।)

**वसिष्ठः**— (कौशिकेन सह ।) एधि सम्राट् (इत्यभिषिञ्चति ।)

(नेपथ्ये पुष्पवृष्ट्या सह दुन्दुभिध्वनिः ।)

**कौशिकः**— ननु राजन् , किं ते भूयः प्रियमुपहरामि ।

**रामः**—भगवन् ,

धनुरुपनिषदाप्तिस्तापसत्राणमार्ते-

र्विमतकुलविमर्दः सेतुबन्धोऽम्बुराशौ ।

क्षितिदुहितृविशुद्धिर्बन्धुराज्याप्तलाभो
　मुनिवर सकलोऽयं त्वत्प्रसादानुभावः ५७ ॥

अतः किमवशिष्यते । तथापीदमस्तु ।

भरतवाक्यम् ।

धर्मः सत्यपुरस्कृतो विजयतां कामार्थयोः कामधु-
　क्कामार्थौ तदनुग्रहादुपचितौ स्यातां प्रजाभूतये ।
दूरादुज्झितकापथाः पथि निजे यान्त्वस्खलन्त्यः प्रजाः
　पन्था भूपतिपालितः कृतयुगं स्रष्टुं सदा कल्पताम् ॥५८॥

कौशिकः—तथास्तु । (इति निष्क्रान्ताः सर्वे ।)

इति श्रीलक्ष्मणसूरिप्रणीते पौलस्त्यवधनाटके
षष्ठोऽङ्कः ।
समाप्तं चेदं नाटकम् ।
ओं तत्सत् ।

PRINTED AT THE ORIENTAL PRESS, MADRAS.